तस्यैव सवितुर्भर्गः भाभिर्गतिरस्येति व्युत्पत्त्या सूर्यमंडलांतःस्थं नारायणाख्यं ज्योतिः "य एषोऽन्तरादित्ये हिरण्मयः पुरुषः" इत्यादिश्रुतिप्रसिद्धं मायाविरूपमुपास्यं निर्दिष्टं धीमहीत्यनेनान्वयात् तथा देवस्येति तस्यैव ब्रह्मांडांतर्नानावतारैः क्रीडतो रामकृष्णादिरूपं तृतीयं रूपमुक्तं तथा धीमहीति विरोधपूर्वकं स्वार्थमुभयार्थमीश्वरार्थं चेति चतुर्द्धा भजनं दर्शितं तथा तृतीयपादे बहिर्मुखस्वभावायाबुद्धेः अंतर्मुखतया प्रकर्षेण प्रेरणे प्रत्यगात्मावसाने कैवल्यरूपेप्यस्य हेतुत्वप्रदर्शनेन तस्यैव सकलकर्मोपास्तिफलप्रयोजकत्वमुक्तम् एवं च गायत्र्यां कांडत्रयं दर्शितं तथा च मैत्रायणीश्रुतिः—"तत्सवितुर्वरेण्यमित्यसौ वा आदित्यः सविता स वा एवं प्रवरणीय आत्मकामेनेत्याहुर्ब्रह्मवादिनः" इति । भर्गोदेवस्य धीमहीति सविता वै देवस्ततोयोस्य भर्गस्तं चिंतया-

मीत्याहुर्ब्रह्मवादिन इति। धियो योनः प्रचोदया-
दिति बुद्धयो वै धियस्ता योस्माकं प्रचोदयादि-
त्याहुर्ब्रह्मवादिनः" इति अत्रात्मकामेन प्रवरणीय
इति सवितुः प्रत्यगात्मत्वं ज्ञानकांडार्थ उक्तः चिं-
तयामीति चिन्तायोग्यत्वमुपासनाकांडार्थ उक्तः।
धिय इत्यनेकाकारधीप्रेरकत्वं कर्मकांडार्थ उक्तः
तत्राद्य उपेयः परो सन्निकृष्टविप्रकृष्टौ तत्प्राप्त्यु-
पायौ। एवं वेदमातुर्गायत्र्याः कांडत्रयात्मकत्वेन
तज्ज्ञानां वेदानां तन्मूलकानां रामायणादीनां च
तथात्वं ज्ञेयम् एत एवार्थाः राघवादिविंशति-
नामभी रामरक्षायामवयवार्थद्वारा प्रदर्श्यन्ते।
तथाहि:—

शिरो मे राघवः[1] पातु भालं दशरथा-
त्मजः[2] ॥ कौशल्येयो[3] दृशौ पातु
विश्वामित्रप्रियः श्रुती ॥ १ ॥ घ्राणं

पातु मखत्राता मुखं सौमित्रिवत्सलः॥
जिह्वां विद्यानिधिः पातु कंठं
भरतवंदितः ॥ २ ॥

रंचति नाशं गच्छतीति रघुः व्यष्टिसमष्टिरूपो अन्नमयःकोशःतत्र विदितो राघवःब्रह्मांडाभिमानी मम ब्रह्मांडरूपं शिरः पातु १ स एव दशरथस्य दशभिरिन्द्रियाश्वैर्युक्तस्य मनोमयकोशरूपस्य आत्मेवात्मा कार्यं प्राणमयः कोशस्तज्जः तेन अन्नमयादांतरः प्राणमयः ततोप्यान्तरो मनोमय इति पूर्वयोः प्रविलापनं सिद्धम्, स च वासनातंतुसंतानात्मा मनोमयः ब्रह्मांडात्सृष्टिक्रमेणार्वाचीनं भालदेशं ब्रह्मलिपिस्थानं मे पातु २ कुशलैव कौशल्या स्वार्थे ष्यञ् सर्वार्थावद्योतनसमर्था बुद्धिस्तस्यां भवः कौशल्येयो विज्ञानमयः ततोप्यान्तरः स मम दर्शनसाधने दृशौ पातु एतेन मनोमयस्याप्यपवाद उक्तः ३ । विश्वस्य मित्रं

निरुपाधिप्रेमगोचरतया प्रेयान् आनंदमयाख्य आत्मैव विश्वामित्रः तस्यापि प्रियः 'सुषुप्तौसता सोम्यतदासंपन्नो भवति' इतिश्रुतेःप्राप्तः सन्नात्यंतिकदुःखनिवृत्तिकरस्तदधिष्ठानभूत आनंदः पुच्छब्रह्मापरपर्यायो मम श्रुती स्वाधिगमद्वारभूते पातु तदेवं प्रथमेन पादेन रामे ब्रह्मांडमारोप्य अंत्यपादत्रयेणापोद्य च रामस्य शुद्धं रूपं गायत्रीप्रथमपादोक्तं दर्शितम् अयं चार्थः कृत्स्नोपि वेदान्त प्रसिद्ध इति मूलवाक्यानि नोदाहृतानि ४। मखत्राता अव्यभिचारेण क्रतुफलप्रदः फलमतउपपत्तेः इति न्यायादिति भावः। स मे क्रतुफलभूतदिव्यगंधरसाद्युपलब्धिकरणं घ्राणरसनादिकं पातु ५ सौमित्रिवत्सलः सुष्ठु मित्रं जीवपक्षिणः सखा ईश्वरः तस्यापत्यं सौमित्रिर्हिरण्यगर्भः तत्र-वत्सलः तेन तत्तादात्म्यं प्राप्तानामुपासकानां अनुग्रहकर्तृत्वमुक्तम् सौमित्रेर्मुख्य-

कार्यत्वात्तद्वत्सलो मे मुखं पातु ६ । तावेतावंतर्यामिसूत्रात्मानौ विद्यैकलभ्यौ न तु शुष्कतर्कगम्यौ इति विद्यावाप्तिद्वारभूतां मम जिह्वां विद्यानिधिः विद्यासंप्रदायप्रवर्तकः पातु ७। विद्यापि यज्ञाद्यपूर्वप्राप्या "विविदिषंति यज्ञेन" इत्यादिश्रुतेः "अतो भरतैः कर्मठैर्वैदितः शरणीकृतः भरंतिकर्मफलं संचिन्वंति ते भरताः यजमानाः 'भरतमुद्धर' इतिमंत्रलिंगात् यज्ञश्च कंठस्थैरेवमंत्रैः स्तोत्रशस्त्रादिभिर्निर्वर्त्यंत इति यज्ञप्रियो मे मंत्रोच्चारणस्थानं कंठं पातु तदेवं यज्ञादिजन्येन पुण्येन प्राप्तोपासनामार्गः भर्गाख्यं सूत्रमीशं वा क्रममुक्तिद्वारं प्राप्नोतीति श्लोकद्वयतात्पर्यम्॥८॥१॥२॥

स्कंधौ दिव्यायुधः पातु भुजौ भग्नेश कार्मुकः ॥ करौ सीतापतिः पातु हृदयं जामदग्न्यजित् ॥ ३ ॥

मानुषभावेऽपि ऐश्वरदिव्यायुधानां शार्ङ्गादीनां धारित्वाद्दिव्यायुध आयुधनिधानस्थानभूतौ स्कंधौ मे पातु ९। तथा भुजबलेनैव भग्नेशकार्मुको भुजौ मे पातु, अत्र ईशकार्मुकं मेरुरूपम् "रथः क्षोणीयंता शतधृतिरगेन्द्रोधनुः" इति त्रिपुरवधे तस्य तत्कार्मुकत्वप्रसिद्धेः। एतेन मानुषभावेऽपि महेश्वरादप्याधिक्यं दर्शितम् १०। तथा वीर्यशुल्कायाः सीतायाः करग्राही सीतापतिः करौ मे पातु, अनेन नामद्वयेन विश्वामित्रदत्ताया बलाख्याया विद्यायाः फलं शारीरं बलाधिक्यं दर्शितम् ११। अतिबलायास्तु फलं मनःसंकल्पमात्रेण अलौकिकार्थसाधनं तच्च जामदग्न्यजिदिति ब्राह्मं वैष्णवं च तेजो दधानस्य जामदग्न्यस्य तपोराशिवधेन स्पष्टीकृतम्। अत एव हार्दबलवान् हृदयं मे पातु ताहशबलप्रदानेनेति भावः १२। एवं तृतीयं पारमेश्वरं रूपं ब्रह्मविष्णुशिवे-

योऽप्यधिकं मानुषभावेपीति तृतीयश्लोकेन गायत्रीस्थदेवस्येति पदस्यार्थो दर्शितः ॥ ३ ॥

मध्यं पातु [13]खरध्वंसी नाभिं [14]जांबवदाश्रयः॥ [15]सुग्रीवेशः कटिं पातु सक्थिनी [16]हनुमत्प्रभुः ॥ ४ ॥

तस्यैव चतुर्द्धा भजनमाह मध्यमिति । खरादीनां द्वेषपूर्वकं रामं ध्यायताम् अध्याय्यपेक्षया श्रेष्ठत्वाद्भक्त्याद्यभावाच्च मध्यमत्वं तेषु निग्रहमुखो रामानुग्रहः सोपि मध्यमः, अतस्तत्कर्ता खरध्वंसी मध्यं नाभिना समसूत्रं पृष्ठप्रदेशं मे पातु १३ । जांबवत आपत्काले स्वार्थमेव कामपूर्वकं ध्यायतो द्वेषांशाभावात्ततोप्यांतरत्वमतो जांबवदाश्रयो मे नाभिं मध्यादाभ्यंतरं पातु १४ सुग्रीवस्य तु 'देहि मे' 'ददामि ते' इति न्यायेन पूर्वं स्वार्थसंपत्तिः पश्चादाराधनमिति वणिग्वद्ध-

जतो जांबवदपेक्षया किंचिदूनत्वमतः सुग्रीवेशो बाह्यं मे कटिं पातु १५। हनुमतस्तु केवलं निष्काममीश्वरार्थमेव भजतोऽन्तरंगत्वाच्छिशुवत्प्रियत्वेनांकमारोपयितुं योग्यत्वात् हनुमत्प्रियो मे सक्थिनी अंकदेशं पातु १६। एवं व्यक्तस्य देवस्य चतुर्विधं ध्यानं चतुर्विधभक्तकृतं चतुर्थश्लोकेन दर्शितम् ॥ ४ ॥

जानुनी सेतुकृत्[१७]पातु जंघे दशमुखा[१८]-
न्तकः । पादौ विभीषण[१९]श्रीदः पातु
रामो[२०]ऽखिलं वपुः ॥ ५ ॥

अथ व्यक्तपरित्यागेनाव्यक्तालंबनाया गतेः संसारसमुद्रसेतुरूपायाः प्रदाता सेतुकृत् जानुनी शिशोः प्रथमगतिसाधने मे पातु अनेन स्थूलदेहातिक्रम उक्तः अस्यामवस्थायां ध्यायी विदेह इत्युच्यते १७। तथा दश इन्द्रियाणि मुखानि

भोगद्वाराणि यस्य स दशमुखो लिंगात्मा तस्यांतको नाशकः प्रविलापयिता दशमुखांतकः ईषद्दृढांगस्य शिशोः मंदोर्ध्वगतिसाधने जंघे मे पातु, एतेन लिंगदेहातिक्रम उक्तः अस्यामवस्थायां ध्यायी प्रकृतिलय इत्युच्यते १८। तथा विगतं भीषणं भयंकरमज्ञानं यस्य स विभीषणो निरस्ताविद्यः तस्मै श्रीः 'एषास्य परमा संपत्' । इति श्रुतिप्रसिद्ध आनंदः तस्याः प्रदाता विभीषणश्रीदो निघृष्टतलतया शीघ्रगतिहेतू पादौ मे पातु, एतेनानर्थनिवृत्तिपूर्विका आनंदावाप्तिरुक्ता, अस्यामवस्थायां ध्यायी मुक्त इत्युच्यते १९। रामःसर्वेश्वरतया ब्रह्मांडमंडपे रमणशीलो मम जीवन्मुक्तभावं कामयमानस्य अखिलं वपुस्त्रिविधमपि शरीरं पातु समस्तयोगप्रतिपक्षनिरासेन ब्रह्मसाक्षात्कारक्षमं करोत्वित्यर्थः २० । तदेवं ब्रह्मणि राघवपदेनाध्यारोपितस्य प्रपंचस्य

दशरथात्मजादिपदत्रयेणापोदितस्याधिष्ठानं प्रातु ध्यानालंबभूतं भगवतः समष्टिरूपं व्यष्टिरूपं च द्वाभ्यां श्लोकाभ्यां प्रदर्श्य व्यष्ट्युपासनां चतुर्थेन समष्ट्युपासनां पंचमार्द्धेन च प्रदर्श्य शेषेणानर्थ-निवृत्त्यानंदावाप्ती जीवन्मुक्तिसहिते निरूपिते इति अत्रैव कृत्स्नः शास्त्रार्थोऽस्तीति प्रदर्शनेन रामायणद्रुमांकुरस्य रामकवचस्य गायत्रीबीज-त्वमुपपादितम् । यथात्र कथांशः स्पष्टं सूच्यते अध्यात्मांशस्तु परोक्षवृत्त्या गम्यते, एवं रामा-यणे तन्मूलभूते वेदे च तदुभयं ज्ञेयम् ॥ ८ ॥

तथाहि:—"मंत्रह्रदात्कथाकुल्या विद्याकेदार-मागता ॥ मोक्ष (रस) स्य च प्रसूर्मध्ये पीयते कर्ममार्गगैः ॥ १ ॥ इदमाम्नायते—"तुग्रो (ह) भुज्युमश्विनोदमेघे रयिन्न कश्चिन्ममृवाम वाहाः ॥ तमूहथुर्नौभिरात्मन्वतीभिरंतरिक्षप्रुद्भिर-पोदकाभिः ॥ १ ॥ तुग्रो नाम कश्चिद्राजा भुज्यु-

संज्ञं स्वपुत्रम् उदमेधे समुद्रे आवाह्यः प्रापितवान्।
तत्र दृष्टांतः—रयिं न कश्चिन्ममृवानिति। यथा
कश्चिन्मृतः पुरुषो रयिं धनं तद्वत्। न शब्दोऽत्र
उपमार्थे तं तथाभूतं भो अश्विनौ युवां नौभिः
बह्वीभिर्नौकाभिः ससैन्यम् ऊहथुः तीरं प्रापया-
मासथुः। कीदृशीभिः—आत्मन्वतीभिः, आत्मा
स्वामी विद्यते यासां ताभिः स्वीयाभिः अंतरिक्षे
गगनतुल्येऽर्णवे प्लवंते ताभिरंतरिक्षप्रुद्भिः, अपोद-
काभिरपगतजलाभिः इत्यश्विदैवत्ये कर्मणि विनि-
युक्तस्यास्य मन्त्रस्य याज्ञिकाभिमतोर्थः कर्मस-
मृद्ध्यर्थः "एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं
यत्कर्मक्रियमाणमृगाभिवदति" इति ब्राह्मणाच्च।
तत्कामैरेवमेवायं व्याख्येयः। तथा "ऋचो अक्षरे
परमे व्योमन्यस्मिन्देवा अधिविश्वे निषेदुः।
यस्तन्न वेद किमृचा करिष्यति यइत्तद्विदुस्त इमे
समासते॥" इति मंत्रेण सर्वासामृचां सर्वेन्द्र

दैवत्ताधिष्ठानभूतपरमव्योमशब्दितब्रह्मपरत्वावधा-
रणात्, अतद्विदोऽध्ययनादेर्वैयर्थ्याभिधानाच्च
अध्यात्मपरतयाप्ययं मंत्रो व्याख्येयः। तदायमर्थः
तुक् अपत्यं राति स्वीयत्वेन आदत्ते इति तुग्रः
पुत्राद्येषणावान् भुज्युं भुंक्ते पूर्वार्जितं कर्मफलं
यौति च क्रियमाणेन कर्मणा मिश्रीभवति
भुज्युरात्मा तम् उदमेघतुल्ये संसारसमुद्रे प्राक्षिपत्
भो अश्विनौ 'यो वैतत्काम्यसूत्रं विद्यात्तं चांतर्या-
मिणमिति स ब्रह्मवित्' इति श्रुतिप्रसिद्धौ
सूत्रांतर्यामिणौ युवामाचार्यरूपेण नौभिः "तत्त्व
मसि" आदिवाणीभिः आत्मन्वतीभिरात्मैव
प्रतिपाद्यो विषयो यासु ताभिः अंतरिक्षेऽनालंबने
मार्गे हार्दाकाशे प्लुवंते संचरंति ताभिः सगुणब्र-
ह्मालंबनाभिः अपोदकाभिः उनत्ति आर्द्रं करोति
असंगमपि संगिनं करोतीत्युदकम् अज्ञानं तद्वि-
रोधिनीभिरिति शेषं पूर्ववत्। अत्र कथामालंब्य

देवता स्तूयते तत्रालंबनीभूतानां तुग्रादिपदार्था-
नामनित्यानां संयोगेन वेदस्यापौरुषेयत्वं "मा
बाधिष्ट" इति देवताधिकरणेऽवांतरतात्पर्येण तेषां
प्रतिकल्पं समाननामरूपाणामुत्पत्तिमभ्युपगम्य
व्रीह्यादिपदार्थानामिव प्रवाहानादित्वमुक्तम् ।
चमसाधिकरणे त्वेवंजातीयकानां कथारूपकेण
ब्रह्मविद्यायां मुख्यं तात्पर्यमिति निश्चीयते । तत्र
हि अजामेकां "लोहितशुक्लकृष्णाम्" इत्यादिषु
मंत्रेषु अजादिशब्दानां श्रौतार्थपरिग्रहे मंत्रस्या-
धिगतार्थगमकत्वेनाप्रामाण्याद्वैयर्थ्यं मा भूदिति
तेषां 'न जायत' इति योगेन मूलप्रकृत्यादिप्रति-
पादकत्वमाशंक्य मंडपं भोजयेत्यादौ मंडप-
स्थजनवन्मंडपायिनो झटित्यनुपस्थानेन रूढि-
पूर्वकलक्षणातो योगस्य दुर्बलत्वात् छांदोग्यस्था-
नां रोहितादिरूपाणामन्यत्रेत्यभिज्ञानात् पराभि-
मतप्रकृतिग्रहणे विशेषहेत्वभावाच्च तेजोबन्नात्मि-

काभूतप्रकृतिरजेवाजेति अजारूपकेणात्र प्रतिपा-
द्यत इति सिद्धांतितम्, एवं रामायणस्य तन्मूल-
भूतानां मंत्राणां च अवांतरतात्पर्येण कथापरत्वं
महातात्पर्येण विद्यापरत्वं च वक्तुं युक्तम्। ननु "सर्वे
वेदा यत्पदमामनंति" इति, नामानि सर्वाणि
यमाविशंति 'यो देवानां नामधा एक एव' इत्यादि
श्रुतिभ्यः परमतात्पर्यविषयीभूतस्य रामस्य सर्व-
दैवतावाचकैः शब्दैः अभिधानं युक्तम् अवांतर-
तात्पर्ये तु व्यवस्थाया आवश्यकत्वान्नान्यदैवत्यो
मंत्रो रामकथां प्रकाशयितुमीष्टे। अथ हठात्तत्पर-
त्वं वर्ण्यते तर्हि एकस्य शब्दस्यानेकार्थता स्यात्
सा चानिष्टेति चेत्। उच्यते यथा एकैव रेखा
स्थानभेदात् एकदशशतसहस्रादिव्यपदेशान्
लभते एवमेकमेव पदं वाक्यं वा पदांतरवाक्यां-
तरसमभिव्याहारादनेकमर्थं प्रत्याययति न च
तावतानानार्थत्वं शब्दस्य संभवति, अपि तु

वृत्तिभेद एव तथाहि एकमप्यमृतपदम् "यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥" इत्यत्र कैवल्यवाचि "अपाम सोमममृता अभूम" इत्यत्र देवभाववाचि "प्रजामनुप्रजायसे तदुते मर्त्यामृतम् इत्यत्र संतानवाचि दृष्टम्। यथा वा "यज्ञेन यज्ञमयजंत देवा" इति वाक्यम् "अबध्नन्पुरुषं पशुम्" इत्यव्यवहितातीतमंत्रावयवेन जीवस्य सूक्तदेवतालोचनया परमेश्वरस्य चोपस्थितेर्जीवो ब्रह्मणि प्रविलापनीय इत्यर्थे पर्यवस्यति तदेव "तं यज्ञं बर्हिषि प्रौक्षन्, मुखादिन्द्रश्चाग्निश्च" इत्येताभ्यां वाक्याभ्यामन्वीयमानं बर्हिःस्थेन पशुसोमादिना इन्द्राग्न्यादयो देवता यष्टव्या इति ब्रवीति तदेवाग्निमंथनीयानामृचां परिधानीयायां विनियुज्यमानम् "यज्ञेनैव तद्देवा यज्ञमयजंत यदग्निनाग्निमयजंत" इति ब्राह्मणे व्याख्यातमर्थं ब्रवीति तत्रा

ध्यात्मिकोर्थो मुख्यः उपेयत्वात् आधिदैविकस्तु तत्प्रत्यासन्नत्वादमुख्यः, तृतीयस्तु संततावभृतत्ववत् ध्यानयज्ञांगभूतकर्मयज्ञांगयोरम्योर्यज्ञत्वमतिजघन्यं भवति तथा इन्द्रादिशब्दोपि बलवता रामालिंगेनोपहितः तमिदम् इन्द्रं सन्तमिन्द्र इत्याचक्षते 'इदि परमैश्वर्ये' इति श्रुतिस्मृतिनिर्दिष्टं मुख्यवृत्त्या स्वार्थमभिधत्ते, स एव देवतालिंगोपहितस्तत्प्रत्यासन्नं शचीपतिं ब्रवीति लक्षणया स एव पुनः "ऐन्द्र्या गार्हपत्यमुपतिष्ठेत" इति श्रुत्या गार्हपत्योपस्थाने विनियुक्तायामृचि दृष्टो गौण्या वृत्त्या गार्हपत्यमभिधत्ते। किंचान्यत्ररूढोपि शब्दो लिंगबलादन्यमर्थं ब्रवीति। "यथा सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यंते" इति सर्वभूतोपादानत्वलिंगाद्भूताकाशपरोपि आकाशशब्दो जगत्कारणं ब्रवीति तस्मादवांतरतात्पर्यविषयेकथायामपि बलवल्लिंगोपहितोन्यदैवत्योपि मंत्रो राम

मेव ब्रवीति न चानेकार्थतादोषः परिहृतत्वात् ।
ननु चमसाधिकरणन्यायेन कर्मस्वविनियुक्ता-
नामजादिमंत्राणां कैमर्थ्याकांक्षिणामस्तु विद्या-
परत्वम् तुभ्रादिमंत्राणां तु कर्मसु विनियुक्तानां
निराकांक्षत्वान्न तद्युज्यते मानाभावात् "सर्वे
वेदा, ऋचो अक्षरे" इति श्रुत्योरपि वेदानामृचां
च कर्मपरंपरयापि यदाक्षरपरत्वकृतेनैकस्य तुभ्रा-
दिमंत्रस्यार्थद्वयकल्पने प्रमाणभावं भजते नापि
"यज्ञेन यज्ञम्" इत्यत्रेवात्र वाक्यांतरसमभिव्या-
हारोस्ति, नापि "इन्द्रो मायाभिः" इतिवदस्य वि-
द्याप्रकरणे पुनःपुनः पाठोस्ति येन तद्वशादस्या-
पि वैयर्थ्यं स्यात् । तथा सति इषेत्वादि मंत्राणाम-
पि तत्कल्प्यं स्यात्तेन चात्यंतं श्रुतिपीडाकर्मकां-
डोच्छेदौ स्यातां तस्मान्मंत्राणां रामायणमूलत्वे
संभवत्यपि अध्यात्मपरत्वं न युज्यत इति चेत् ।
न; एकस्मिन्नेव विषये प्रतिपत्तृभेदेन प्रतिपत्ति-

भेददर्शनात् । तथाहि एकं रज्जुखंडं कश्चित्सर्प इति, कश्चिद्दंड इति; कश्चिद्रज्जुरिति प्रत्यक्षेण प्रत्येति । एकं वा घटं कश्चिदसत्त्वेन कश्चिदनिर्वचनीयत्वेन तर्कबलात्प्रत्येति, तथा "य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्म" इति प्रजापतिवाक्यादेकमेवात्मानं देहादिविशिष्टमेवामृतादिगुणभाक्त्वेन विरोचनः प्रतिपेदे इन्द्रस्तु तत एव क्लेशेन देहत्रयातीतं तादृक्त्वेनेति दृश्यते । यास्कोपि "बहुप्रजा निर्ऋतिमाविवेश" इत्यस्य बहुप्रजाः कृच्छ्रमापद्यत इतिपारिव्राजकाः, वर्षकर्मेति नैरुक्ता इति एकमेव निर्ऋतिपदं द्वेधा व्याचष्टे । वर्षकर्मेत्यस्य व्याख्याभूमिमापद्यत इति तत्रैव ज्ञेयम् । तस्मादस्ति प्रतिपत्तिभेदादर्थभेदो मंत्राणाम् । अत एव यास्कः स्थालीपुलाकन्यायेन कांश्चिन्मंत्रानधिदैवतमध्यात्मं च व्याख्याय सर्वेषामचेतनदेवतानामभि-

रध्यात्मपरतया व्याख्यानं कर्तव्यमित्याशयेना-
ह—"माहाभाग्याद्देवताया एक आत्मा बहुधा
स्तूयत एकस्यात्मनोन्ये देवाः प्रत्यंगानि भवंत्यपि
च सत्त्वानां प्रकृतिभिर्ऋषयः स्तुवंतीत्याहुः
प्रकृतिसार्वनाम्न्याच्चेतरेतरजन्मानो भवंतीतरेत-
रप्रकृतयः कर्मजन्मान आत्मजन्मानः आत्मैवै-
षां रथो भवत्यात्माश्वा आत्मायुधमात्मेषवः सर्वं
देवस्य देवस्य" इति । एतदेवाभिप्रेत्य व्यासोपि
आश्वमेधिकाध्यात्मे 'वृत्रेण पृथिवी व्याप्ता' इत्या-
रभ्य "ततो वृत्रं शरीरस्थं जघान भरतर्षभ ॥
शतक्रतुरदृश्येन वज्रेणेतीह नः श्रुतम् ॥ इति ।
अत्र वृत्रशतक्रतुवज्रशब्दानज्ञानजीवविवेकेषु प्रा-
युंक्त । वनादिरूपकेण च ब्रह्मान्यरूपयत्तत्रैव क्व-
चिदधिलोके दृष्टमप्यर्थं मंदाधिकारिणेऽधिदेवप-
रतया व्याचष्ट यथोक्तम्—"के ये ते स्त्रियौ धाता
विधाता ये च ते सिताः कृष्णाश्च तंतवस्ते रात्र्य-

इनी इत्यादिना । विद्वांसस्तु–"द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परिद्यामृतस्य ॥ अपुत्राग्ने मिथिनासो अत्र सप्त शतानि विंशतिश्च तस्थुः" इत्यादीनामृचां संवत्सरोऽहोरात्रमात्रपरत्वेनानुवादस्वरूपत्वं मा भूदिति इत्थं व्याचक्षते। षडिन्द्रियाणि षडृतवः ऋतावृतौ द्वौ द्वामासाविव प्रतीन्द्रियं रागद्वेषौ प्रतिमासं द्वौ पक्षाविव प्रतिरागं प्रतिद्वेषं च पक्षद्वयं यथा धर्मे रागः शुक्लः अर्थे कृष्णः, एवं धर्मे द्वेषः, कृष्णः, अर्थे शुक्ल इति। प्रतिपक्षं पंचदश तिथयः ताश्च सूर्यचंद्रयोः सन्निकर्षविप्रकर्षतारतम्याद्भवन्ति तत्र सूर्य आत्मा चन्द्रः षोडशकला मनोरूपी अहमर्थः कलाश्च प्राणः १ श्रद्धा २ खं ३ वायुः ४ ज्योतिः ५ आपो ६ भूः ७ इन्द्रियम् ८ मनः ९, अन्नम् १० वीर्यम् ११, तपः १२, मंत्राः १३, कर्म १४ लोकाः १५, नाम १६ च। तत्र नाममात्रावशिष्टं मनः

सुप्तौ प्रलये च यदात्मनि सर्वाभिः कलाभिः सह निलीयते सा केवलतमोमयी अविद्या रात्रिर्दर्शः। तत्र विवेकेन यथा यथा कलानामात्मनः पृथग्भावः तथा बोधचन्द्रो वर्द्धते, या तु सत्त्वपुरुषान्यताख्यातिः सैव सूर्यचन्द्रयोरत्यंतविश्लेषरूपाविद्या पौर्णमासीति । ऋतस्य कर्मणः फलभूतं संसारात्मकं चक्रं तस्माद्विद्वद्दृष्ट्या ऋचां साक्षादक्षरपरत्वमविद्वद्दृष्ट्या तु परंपरयेति सिद्धम्। तदयं संग्रहः "एकैकस्मिन्यथा दर्शे प्रासादो मुहुरांतरैः सहितो दृश्यते देवेष्वेवं लोकः सुरांतरैः ॥ १ ॥ तस्मात्स्युर्देवताः सर्वाः प्रत्येकं विश्वयोनयः । अन्योन्ययोनयश्चैव यथा यास्कमुनीरितम् ॥ अतस्तासां स्तुतिः सर्वा रामस्तुतिरसंशयम् ॥ २ ॥ बलवद्रामलिंगायां यत्किंचिद्देवतामृतम् । रामायणानुसारेण व्याकुर्वंन्नैव दुष्यति ॥ ३ ॥ विनियोगानुगे

गौण्या वेदं व्याचष्ट भाष्यकृत् । तत्त्वानुगो मुख्यवृत्त्या व्याकुर्वे यास्कवत्त्वहम् ॥ ४ ॥ ननु रामायणीया कथा कस्यांचिदपि शाखायां वृत्रवधादिवन्न दृश्यतेऽतोऽस्याः श्रुतिमूलत्वमेव नास्तीति चेत्, नैष स्थाणोरपराधो यदेनमंधो न पश्यति इति न्यायेन त्वयि वेदार्थानभिज्ञे सति न रामायणमपराध्यति । ननु वेदभाष्येपि न रामायणकथासूचकत्वं कस्यचिदपि मंत्रस्य पश्याम इति चेत् । नैषदोषः, विनियोगानुसारिणः कर्मस्वव्युत्पादनार्थस्य भाष्यकारीयव्याख्यानस्य निगमनिरुक्तानुसारितात्त्विकव्याख्यानादूषकत्वात् । किंचात्यल्पमिदमुक्तमायुष्मता मंत्रार्थवादैरपि कर्मणि रुच्युत्पादनार्थमनुपपन्नोप्यर्थः प्रजाया अमृतत्वमात्मवपोत्खननमित्यादिरुपन्यस्यते "प्रजामनुप्रजायसे तदु ते मर्त्यामृतम्" इति, प्रजापतिरात्मनो वपामुदखिदत् इति च ।

एवं च कर्मस्तावकार्थवादानुसारिभाष्यकारीयं व्याख्यानमप्रमुख्यम्। अत एवोक्तं भारते "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरेत्" इति तत्र उपबृंहणं नाम एकत्र मंत्रे तृचे सूक्ते वा दृष्टस्यार्थस्य संक्षिप्तस्य नानास्थानेषु विप्रकीर्णानां तदनुगुणानामर्थानामुपसंहारेण पुष्टिकरणम्। तच्च येन कर्ममात्रं न श्रुतं तेन कर्तुमशक्यम्, अतस्तस्मादल्पश्रुताद्वेदस्य भयं युक्तम्। भगवानपि "यामिमां पुष्पितां वाचम्" इत्यादिनाऽर्थवादानां मोहकत्वं ब्रुवन् तदनुसारिणो व्याख्यानस्यानादरणीयत्वं दर्शयति मंत्रवर्णा अपि नीहारेण प्रावृता जल्प्या च इति अल्पो जल्पो जल्पी तुच्छार्थप्रतिपादिका वाक् तया प्रावृता इति अज्ञानेनार्थवादैश्च वंचिता इत्यर्थः। नन्वेवं तिष्ठतु भाष्यकारीया मर्यादा द्रव्यदेवतादिप्रकाशनद्वारा विध्यर्थं स्मारयतो

मंत्रजातस्य कथं कथासूचकत्वमुपपद्यत इति चेत् सुतरामिति ब्रूमः। तथा हि सर्वोऽपि मंत्र आध्यात्मिकीमाधिदैविकीं वा कथामुपजीव्यैव कर्मांगं स्तुवन् विध्यर्थं स्मारयति। यथा "यत्कृष्णो रूपं कृत्वा प्राविशस्त्वं वनस्पतीन्। ततस्त्वामेकविंशतिधा संभरामि सुसंभृत" इति मंत्रः कृष्णाख्यब्रह्मरूपस्त्वं रूपप्रपंचं निर्माय स्थावरजंगमात्मकं तं प्रविश्य तत्र तद्वस्तुतादात्म्यापत्त्या समिद्रूपोऽसि ततो हेतोः त्वाम् एकविंशतिधा संभरामीति "तत्सृष्ट्वा तदेवानुप्राविशत्, तदनु प्रविश्य सच्चत्यच्चाभवत्" इति ब्राह्मणोक्तकथाप्रदर्शनपूर्वकं समिधां कृष्णभावमापादयत् तासां संभरणं स्मारयति। यथा वा "यस्य रूपं बिभ्रदिमामविन्दद्गुहा प्रविष्टाꣳ सरिरस्य मध्ये। तस्येदं विहतमाभरंत" इति मंत्रो यस्य वराहस्य रूपं धारयन् परमेश्वरः भूमिं

समुद्रमध्येनिगूढस्थाने प्रविष्टामलभत, तेने-
दमुत्खातं मृत्खंडम् आभरंतो वयमिति वराहाव-
तारकथाप्रदर्शनपूर्वकं वराहविहितं स्तुवन् तत्सं-
भरणं स्मारयति । एतेनैव प्रकारेण "इषेत्वोर्जे-
त्वा" इत्यादयोपि मंत्रा व्याख्येयाः । तत्र हि
"इषेत्वोर्जेत्वा" इति "शाखामाच्छिनत्ति" इति
विनियोगात् हे शाखे भो स्वसृष्टशाखांतःप्रवेशेन
तत्तादात्म्यापन्नपरमेश्वर त्वाम् इषे अन्नाय "अन्नं
वै विराट्" इति श्रुतेर्विराड्रूपाय ऊर्जे रसाय "रसो
वै सः" इति श्रुतेः परमानंदप्राप्त्यैव च्छेदनेनावा-
प्नवानीति । एतेन "ओषधे त्रायस्वैनं स्वधिते
मैनं हिंसीः, शृणोत ग्रावाणः, लोमभ्यः स्वाहा,
चंक्रमणाय स्वाहा" इत्यादयोऽचेतनार्थे संबंधा-
च्चेतनप्रवेशतत्तादात्म्यापत्तिपरतया व्याख्येयाः ।
एवं हि व्याख्याने क्रियमाणे "पुरुष एवेदं सर्वम्,
सर्वं खल्विदं ब्रह्म, सर्वे वेदा यत्पदमामनंति,

इमानि सर्वाणि यमाविशंति, ऋचो अक्षरे परमे व्योमन् इत्यादयः श्रुतयः सर्वस्यात्ममात्रत्वं सर्वेषां शब्दानां तत्प्रतिपादनपरत्वं च दर्शयंत्यः समंजसा भवंति । तत्र यः संभरणादिकं कर्मैव प्रशंसति स कर्मठोऽल्पश्रुतः, यो वराहं स उपासको मध्यमः, यः कृष्णं स तत्त्वज्ञ उत्तमः, कर्मोपास्तिज्ञानकांडानामुत्तरोत्तरस्य प्रशस्तत्वात्,न हि येन संभरणस्य महत्त्वं सोर्थः संभरणादमहानिति संभवतीति सहृदयग्राह्यमेतत्। तत्रैवं सति भाष्यकारीयं व्याख्यानं हे शाखे त्वां लौकिकयोरन्नरसयोः प्राप्त्यर्थं छिनद्मीति क्रियमाणच्छेदनप्रशंसार्थम् ईदृशमिदं,शाखाच्छेदनं येनान्नरसौ लभ्येते इति सोयमर्थःकर्मजडानांरुचिकरोपि पूर्वोक्तस्यार्थस्य प्रत्यक्षश्रुतिशिखरमूलस्य सहृदयग्राह्यस्य बाधकः। किञ्च,विनियोगमात्रात्स्वार्थमुत्सृज्य केवलकर्मपरत्वं मंत्रस्य न वक्तुं शक्यते । तथाहि

"इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं ॥ समूढमस्यपां सुरे" इत्ययं मंत्रः वाक्नियमलोपप्रायश्चित्तार्थं जपे सर्वप्रायश्चित्तार्थमाज्यहोमे वैष्णवो (?) पांसुयाजस्य पुरोनुवाक्यत्वेन च विनियुज्यते, न चात्र तदनुकूलं किंचिल्लिंगं दृश्यते येन विनियोगभेदेन व्याख्यानभेदोत्र कल्पयितुं शक्यते, किन्तु केवलं विष्णोर्माहात्म्यमुच्यते, इदं त्रैलोक्यं पदत्रयेण विष्णुरतिक्रांतवान्न तच्चित्रं यतस्तदस्य पांसुमति पदे पांसुरूपेण सम्यगारूढमिति । न चैतेषां व्याख्या "इषे त्वा" इतिवद्विनियोगमात्रविदा दुष्करराहवामनप्रादुर्भावान् ऐतिहासिकानजानता कर्तुं शक्यम् । द्वितीये "आज्यैः स्तुवते, पृष्ठैः स्तुवते प्रउंग (?) शंसति, निष्कैवल्यं शंसति" इत्यादौ स्तुतशस्त्रयोस्तु संस्कारो "याज्यावद्देवताभिधानत्वात्" इति सूत्रेण, । यथा याज्या देवताभिधानरूपया दृष्ट्यैव द्वारा इष्टदेवतास्मा-

रकत्वेन प्रधानयागसंस्कारार्थौ, एवं स्तोत्रशास्त्रे अपि मंत्राणामन्यत्र क्लृप्ताया दृष्टार्थताया लंघनीयत्वादिति प्राप्तयापि वा श्रुतिसंयोगात्प्रकरणे "स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम्" इति सूत्रेण स्तुतेः श्रुतिप्रकरणाभ्यां प्रतीयमानं साध्यत्वमुल्लंघ्याश्रुतस्य संस्कारसाधनस्य कल्पनायोगात् याज्यायास्तु प्रकरणादिना यागांगत्वसिद्धेर्दृष्टार्थत्वौचित्यात्तस्याचेण (?) होयागात्प्रधानकर्मणी स्तौतिशंसती इति स्तुतशास्त्राधिकरणे स्तोत्रशास्त्रयोः स्तुत्येकप्रयोजनत्वस्य साधितत्वात्तत्सामान्यादितरस्यापि वेदभागस्य देवतास्तुतिप्राधान्येनैव प्रयोगसमवेतार्थस्मारकत्वमपि युक्तम् एकरूप्यलाभात् तस्माज्जडानां

यथा कथंचिद्व्युत्पादनार्थौ भाष्यकारमते वेदे रामकथाया अदर्शनेपि निगमनिरुक्तोपबृंहणादिसिद्धायास्तस्या अपलापायोगात् अव्युत्प-

न्नाग्राह्यत्वेपि व्युत्पन्नग्राह्यत्वात्सिद्धं रामायणस्य श्रुतिमूलत्वमतस्तन्मूलमन्त्रेष्वपि रामायणे इव कथांशः प्रत्यक्षवृत्त्या लभ्यते, अध्यात्मांशः परोक्षवृत्त्येति भाष्यकारीयव्याख्यानेन सह एकैकस्य मंत्रस्य त्रेधा व्याख्यानं क्रियते तत्र 'कंनश्चित्रमिषण्यसि' इत्यादयः षट् 'इषुर्नधन्वन्' इत्यादयः सप्तचत्वारिंशत्, 'तां सुते कीर्तिम्' इत्यादय एकविंशतिः 'पूर्वापरं चरतः' इत्यादयोष्टाविंशतिरित्येवमादयः परःसहस्रं प्रचह्नका रामकथां प्रकाशयंत्युर्वशीपुरूरवःसंवादादिवत् यथा "हये जाये मनसा" इत्यष्टादशर्चे सूक्ते उर्वशीपुरूरवसोः संवादरूपा कथा यथा वा "ओचित्सखायम्" इति चतुर्दशर्चे सूक्ते यमयम्योः संवादरूपा, तद्वत् तत्र 'कं नश्चित्रमिषण्यसि चिकित्वान्'

इति द्वादशार्चं सूक्तं विखनसः पुत्रस्य वम्रस्यार्षं
तथा चानुक्रांतं कं नो वम्रो वैखानस इति विख-
नाः ब्रह्मा 'विखनसार्थितो विश्वगुप्तये' इति भा-
गवते तत्र विखनःशब्दप्रयोगदर्शनात् वम्रीपदेन
च वम्रीभिरनुवित्तं गुहास्विति वल्मीकवपा ( ? )
संभरणमंत्रालिंगात् वल्मीककारिणो जंतुविशेषा
उच्यंते ताभिर्वल्मीकगर्भस्थतामापादितो मुनि-
र्वाल्मीकिः स एवात्र वम्र इत्युच्यते, यथा वल्मी
कशब्दादपत्यप्रत्ययः एवं वम्रीशब्दादपि गोत्र-
प्रत्ययस्तस्य लुक् शब्दसाधुत्वार्थं ज्ञेयः । वाल्मी-
किश्च ब्रह्मपुत्रो रामायणस्य कर्तेति स्कांदे पार्वतीं
प्रतीश्वरवाक्यं स्मर्यते "वाल्मीकिरभवद् ब्रह्मा
वाणी वाक् तस्य रूपिणी । चकार रामचरितं
पावनं चरितव्रतः" ॥ इति 'ते कं न' इति सूक्तस्य
रामायणस्य च एकार्षेयत्वं सिद्धम् देवता तु
...मशब्दाभ्यां निर्दिष्टः परमेश्वर एक

एव। यथा च रामायणीयप्रथमेध्याये प्रश्नपूर्विका संक्षिप्ता रामकथास्ति तथास्मिन्नपि पंचर्चे इति अनयोर्मूलिमूलभावः सिद्धो व्याख्याय प्रदर्श्यते। तत्रेयमाद्या ऋक् 'कं न' इति। अत्र वम्रः स्वस्य गुरुं कल्पयित्वा तं पृच्छन् तस्योत्तरमुखेनेश्वरं स्तौति–

कं नश्चित्रमिषण्यसि चिकित्वान्पृथुग्मानं वाश्रं वावृधध्यै ॥ कत्तस्य दातु शवसो व्युष्टौ तक्षद्वज्रं वृत्रतुरमपिन्वत् ॥ १ ॥

भो गुरो त्वं चिकित्वान् स्तुत्यं पुरुषं जानन् कं चित्रादिगुणवंतं वावृधध्यै वर्धयितुं पराक्रमादिभिः स्तोतुम् अस्मान् इषण्यसि प्रेरयसि चित्रं रमणीयं पृथुग्मानं पृथून् निरवधिकनृहत्त्वयुक्तान् शौर्यवीर्यादीन् गतान् प्राप्तान् ब्रह्मा-

दीन् मिमीते परिच्छिनत्तीति तं पृथुग्मानं निरतिशयैश्वर्यं वाश्रं वर्णनीयं तथा तस्य पुरुषस्य संबंधिनः शवसः बलस्य व्युष्टौ प्रकाशे मया कृते सति तस्य कत् किं दातु दानं स्तुतः सन् सः नः किं फलं दास्यतीत्यर्थः एवं कःस्तुत्यः किं च स्तुतिफलमिति पृष्टे प्रथमं प्ररोचनार्थं फलं दर्शयति तक्षदिति । अश्वमेधपर्वणि "ततो वृत्रं शरीरस्थं जघान भरतर्षभ । शतक्रतुरदृश्येन वज्रेणेतीह नः श्रुतम्" ॥ इति कृष्णवाक्ये इन्द्रवृत्रवज्रशब्दैरात्ममोहकविवेका उच्यन्ते एतैरेव संकेतैः कृत्स्नो वेदो व्याख्येय इत्येवमर्थः । ततश्च वज्रं स्तोतुर्विवेकं तक्षत् तनुकुर्वन् अमभावश्छांदसः । तेन सूक्ष्मार्थभेदिना वृत्रतुरं स्वाज्ञानहंतारं तम् अपिन्वत् अतर्पयत् स्तुत्या तुष्टः सन् तं विवेकं

 येनाज्ञाननाशादनर्थनिवृत्त्यानन्दावाप्ती

भवत इति पक्षेनलं व्याहरन्ब्रह्मैव भवतीति विषय-प्रयोजने दर्शिते ॥ १ ॥

सहिद्युताविद्युतावेति सामपृथुं योनि-मसुरत्वाससाद ॥ ससनीळेभिः प्रस-हानो अस्य भ्रातुर्न ऋते सप्तथ स्यमायाः ॥ २ ॥

अथ स्तुतिस्वरूपं च दर्शयतिस हीति। स घन-श्यामः पुरुषः राम इति कथासन्बंधवशादवसी-यते । हि प्रसिद्धः प्रत्यगात्मत्वात् । द्युता स्वस्य दीप्त्या शक्त्या विद्युता तयैव विद्युद्वत्पृथग्विग्रह-या सह साम अपगतद्रोहं यथा स्यात्तथा वेति गच्छति देशान्तरमित्यर्थात्त् 'ऋभ्या सह गयम् आगात्' इत्युपसंहारात् ऋभ्या देव्या सीतया गयं गृहं तल च अस्य पृथुं पृथ्वीं योनिं जायां सीतां जायेदस्तंमघवत्सेदुयोनिरिति ( ) महीं

देवीं विष्णुपत्नीमजूर्यामिति च लिंगात् असुरत्वा आसुरधर्मेण चौर्यधर्मेणेत्यर्थः आससाद अर्थादसुरः रावणाख्यः चोरयित्वा नीतवानित्यर्थः । हनुमदादिभिः सः रामः सनीडेभिस्समाननीडैः स्वलोकवासिभिः पार्षदैः अन्नं 'मुषायन्, इत्युपसंहारात् अन्नं पृथिवीं सीतामित्यर्थः सह अस्य जायाहर्तुर्मायाः नागपाशबंधादिरूपाः प्रसहानः प्रकर्षेण सहते तस्य सर्वाः मायास्तेन सह युद्धप्रसंगे नाशितवानित्यर्थः । तत्र हेतुः यतो मायाः ऋते सत्ये श्रीरामभद्रे न संतीति शेषः । मायावशं हि मायाः परकीया बाधंते न निर्मायमित्यर्थः । कथंभूतस्यास्य सप्तथस्य सप्तमस्य भ्रातुर्भागहर्तुः सोदर्यौ हि भ्रातरौ पित्रा व्यवधानादन्योन्यस्मात्तृतीयौ तत्पुत्रौ पंचमौ सप्तमौ तथा च विष्णोः कश्यपमरीचिब्रह्मविश्रवःक्रमेण रावणः सप्तमः तस्माच्च

स इति इत्थमधिलोकं मंत्रस्यार्थः, अयमेवाधि-
दैविकोर्थः ॥ २ ॥

सवाजं यातापदुष्पदायन्स्वर्षातापरि
षदत्सनिष्यन् ॥ अनर्वायच्छतदुरस्य
वेदोघ्नाञ्छिश्नदेवाँ अभिवर्पसाभूत्॥३॥

अथाध्यात्ममप्युच्यते सवाजमिति॥ स निर-
स्तसमस्ततमायः श्रीरामभद्रः अनर्वाश्वयुक्तवाहन-
हीनः वाजं संग्रामं याता गंताऽभूत् । कीदृशः ।
अपदुष्पदायन् अपगतं दुस्थितं पदं स्थानं कंट
कर्कदमसलिलाद्यनाक्रांतं यस्मात्तेन अपदुष्पदा
सेतुरूपेण पथायन् गच्छन् लंकामित्यर्थात् स्वर्षात
इन्द्रादिलोकानां विभाजको विष्णुः शतदुरस्य
शतद्वारस्य सप्त वै शीर्षण्याः प्राणाः द्वाववांचौ
नाभिर्दशमीति प्रतिवदनं दशद्वारत्वाच्छतद्वारो
रावणः नाभ्यादिस्थानेष्वपि तत्तन्मुखद्वाराऽत्र

रसागमनस्येष्टत्वात् मुखसंख्यानि प्रच्छन्नानि द्वाराणि संतीति ज्ञेयं।तस्य वेदो धनं लंकाराज्यं सनिष्यन् तद्भ्रात्रे विभीषणाय विभजिष्यन् परिषदत् स्वेष्टजनेन परिवृतो न्यषीदत् उपविष्टवान् ।। कीदृशः शिश्नदेवान् कामुकान्रावणादीन् मन् नाशयन् वर्पसा स्वरूपेण अभ्यभूत् अभिभावितवान् सेतुमार्गेण लंकां गत्वा दारहर्तारं हत्वा परि जनेनावृतः शत्रुधनानि तद्भ्रात्रे समर्पितवा नित्यर्थः ॥ ३ ॥

सयह्वोवनीगोंष्ववां जुहोति प्रधन्यासु सस्त्रिः ॥ अपादो यत्र युज्यासोऽरथा-द्रोण्यश्वास ईरते घृतं वाः ॥ ४ ॥

अपद्रुष्पदायन्नित्येतद्विवृणोति सयह्वइति । स रामो यत्रस्थाने घृतं क्षरणस्वभावं घृतं वाःवारि । द्रोण्यश्वासः द्रोणयो नाव एवाश्वा इवं गति साध-

नानि येषां संति ते तथाभूताः एव ईरते गच्छंति यत्र च- युज्यासःसखायो वानराः अपादः पाद-चाराभावाद् पादहीना इव एवम् अर्थाः भवंति तत्रापि महार्णवस्थाने यह्वः महतीः अवनी सस्नि-विस्तीर्णान् भूप्रदेशान्ससार "अद्रिगमहन" इति किन्प्रत्ययो लिङ्गद्भावश्च। जलेपि सेतुं कृत्वा स्थ-लत्वं संपाद्य चचारेत्यर्थः। यासु प्रधन्यासु संग्रा-मयोग्यासु गोषु भूमिषु अर्वागच्छन् आजुहोति अत्यर्थं दानहोमादिकं करोति ताः अवनीः सस्नि-रित्यन्वयः। दशयोजनविस्तीर्णं शतयोजनमा-यतं॥सेतुं कृत्वा सपरिवारस्तेन गच्छतीत्यर्थः॥४॥

स रुद्रेभिरशस्तवारऋभ्वा हित्वीग-यमारेअवद्य आगात्॥ वम्रस्य मन्ये मिथुनाविवव्री अन्नमभीत्यरो दयन्मुखायन्॥ ५॥

सरुद्रेभिरिति सः रामः रुद्रेभिः हनूमदादिभिः सहायैः ऋभ्वा ऋतेन भासनया देव्या सीतया सह गयं स्वस्थानम् आगात् आगतवान्कीदृश आरे अवद्य दूरनिरस्तदोषः सीतां रावणहृतां सर्वदेवसन्निधौ सशोध्येत्यर्थः किं कृत्वा गयम् आगात् अशास्तवारोहित्वी प्रतिकूलकाले गृहं त्यक्त्वा पुनर्देव्या सहागादित्यर्थः । एतत्सर्वं सभविष्यं रामायणं वम्रस्य वाल्मीकेः संबंधिनौ शिष्यौ मिथुनौ द्वौ कुशलवौ विवव्री तस्मादधीत्य लोके विशेषेण विवृतवंतौ इत्यहं मन्ये जानामीति मंत्रद्रष्टुरुक्तिः तत्र भविष्यमाह—अन्नमिति । मुषायन् स्तेनो रावणः अन्नं पृथिवीं तद्रूपां सीताम् अन्नशब्दः पृथिव्याम् "ता अन्नमसृजंत" छांदोग्ये। हृष्टः अभीत्य अभ्येत्य अरोदयत रावणस्पर्शनिमित्तापवादपरिहारार्थं रामेण त्यक्ता सीता रोदनं कृतवतीत्यर्थः ॥ ६ ॥

स अत्र ऋभ्वा सह गयमागादित्युपसंहारो विद्युता सहवेतीत्युपक्रमस्य अन्नं मुषायन्नित्युपसंहारो योनिमाससादेत्युपक्रमस्य दूरे अवद्य इत्युपसंहारोऽसुरस्पर्शनिमित्तकार्थिकानां कायाश्चानुकूल इत्युपक्रमोपसंहारयोरैक्यैकरूप्यादिदं मंत्रचतुष्टयात्मकमेकं वाक्यं परमपुरुषप्रतिपादकं तद्विषयश्च प्रश्नः प्रथममंत्र इति मंत्रपंचकमिदं रामायणसंक्षेपपरमिति वाक्यार्थमर्यादाविदो विदांकुर्वंतु ॥ ५ ॥ एवं मंत्रपंचकस्य प्रत्यक्षवृत्त्या कथापरत्वेपि परोक्षवृत्त्या विद्यापरत्वमपि रामरक्षास्थराघवादिपदानामिवास्ति तत्प्रदर्श्यते स्थालीपुलाकन्यायेन कृत्स्नो वेद एवमेवाधिदैवमध्यात्मं च व्याख्येय इत्येवमर्थं तत्र प्रथममंत्रे यो मुमुक्षूणां स्तव्यः पुमानुक्तस्तस्याध्यारोपापवादाभ्यां तत्त्वं दर्शयति—स हीत्यादिना । स हि स एव स्तुत्यः पुमान् द्युता प्रकाशमानया

विद्यया, विद्युता विपरीतप्रकाशया अविद्यया च सहसामस्वसृष्टं कृत्स्नं जगत् वेति गच्छति अंतर्यामिरूपेण जीवरूपेण च स्वसृष्टं समष्टि-व्यष्टिरूपं क्षेत्रं प्रविशतीत्यर्थः सामशब्द ऋक्सा-माख्यद्विष ( ? ) वाची "सैव नाम ऋगासीदमो नामसाम" इत्यवयवार्थमुक्त्वा "यद्वैतत्सावाऽमश्च समभवतां तत्साम्नःसामत्वम्"इति निर्वचनश्र-वणात् । ऋक्सामशब्दश्चाधिदैविकमाध्या-त्मिकं च प्रपंचं वक्ति "इयमेवगग्निःसामवागे वर्क्प्राणः साम"इत्यादिश्रुतेः। एवम् अनेन जीवे-नात्मनानुप्रविश्य "नामरूपे व्याकरवाणि" श्रुतेः। जीवेन सहितस्य नामरूपव्याकर्तुः ... मे ... प्रवेशोपि तेजोबन्नात्मके प्रपंचे गम्यते तथा–पृथुं कारणापेक्षया स्थूलं योनिं प्रवेशस्थानं शरीरं "योनिष्ठ इन्द्र निषदे अकारि" इति मंत्रव-र्णादत्र योनिः स्थानम् असुरत्वा असुषु प्राणेषु

रममाणत्वेन विरोचनमतेन 'आत्मैवेहमहय्य' (?) इत्यादिना श्रुतेन आससाद प्राप्तवानविद्यावान् देहं प्रविश्य तद्रूपोऽभवत् । तथा च—"ब्रह्माणं तदनुप्रविश्य सच्च त्यच्चाभवत्" इति मूर्तामूर्तप्रपंचात्मकोऽभवदित्यर्थः । ततश्च तमेव प्रेयासं मन्यते नात्मानमिति जीवस्य बद्धत्वमुक्तम् । ईश्वरस्य देहिनः प्रविष्टत्वेपि तदसंगित्वमाह—ससनीलेभिरिति । शुद्धसत्त्वोपाधिरीश्वरः तस्य सनीडाः समानगृहाः निरतिशयधर्मज्ञानवैराग्यादयः सात्त्विकास्तैः सहायैः स ईश्वरोऽस्याविद्यावतो जीवस्य मायाः देहाद्यात्मभावान् प्रसहानः सोढवान् तैर्नाभिभूतोऽभून्नापि तान्प्रत्याख्यत् असंगोदासीनसाक्षिरूपत्वात् । तत्र हेतुः ऋतेनेति-यतःऋते अबाधितानंदस्वरूपे न मायाः संतीतिशेषः।कथंभूतस्य सप्तथस्यसप्तमस्य।भ्रातुः तत्र प्रथमं सच्छब्दितं शुद्धं द्वितीयम् ईक्षितृमा-

याशाबलं तृतीयचतुर्थपंचमानि तेजोबन्नानि षष्ठ-
स्त्रिवृत्कृतानां तेजोबन्नानां संघातः साक्षी वा।
सप्तमः जीवः ज्ञातृत्वं चिद्रूपत्वेन बिंबप्रतिबिंब-
वत्साहश्यात् । एवमध्यारोपितस्य प्रपंचस्या-
पवादार्थं द्वाभ्यां साधनकलापमाह--सवा
जमिति अत्र विद्यायाः सैनिकाः शमा-
: अविद्यायाः कामाद्याः परस्परं सहज-
शत्रवः।तत्र पूर्वेषां दौर्बल्ये योगसंग्रामस्य प्रसक्ति
रेव नास्ति साम्ये त्वस्तीत्याह--स इति। स अवि-
द्यावान् अपदुष्वादा मार्गेण यन् जं (?) याता
यास्यति।निषिद्धकाम्यकर्मणी हि नरकनश्वरसु-
खप्रदत्वाद्दुष्येते तद्वर्जितेन ईश्वराराधनमार्गेण
संचरन् योगयुद्धयोग्यो भवतीत्यर्थः। एतेन कर्म-
णां प्रत्यक्प्रावण्यार्थत्वं दर्शितम् स एव स्वस्यैव
शतदुरस्य विषयानंत्यात् अनेकभोगद्वारस्य
वेदाभोग्यं धनं शब्दादिविषयजातं सनिष्यन्

श्रोत्रादिभ्यस्तद्ग्राहकेभ्यो विभाजयिष्यन् तेनैव हेतुना स्वर्षाता स्वः शब्दितानां शब्दादिप्राप्तिजानां साता विभाजयिता सन् परिसदव् सर्वं परित्यज्य निषीदन्नास्ते । यतः शब्दः श्रोत्रस्यैव विषयोऽतस्तज्जं सुखमपि तस्यैव न ममेत्युदास्ते इत्यर्थः । अतएव अनर्वा सर्वप्रवृत्तिशून्यः न अर्वति गच्छति प्रवर्तत इति योगात् । अत एव शिश्नेन दिव्यंति तान् कामादीन् घ्नन् हिंसन्नेव वयसा स्वरूपेण प्रकाशमानेन अभ्यभूत् । निःशेषकामविलय एव स्वरूपप्रकाशो मोक्ष इत्युच्यते ॥३॥ सयह्व इति । सः अर्वेवार्वा शीघ्रगतिः तीव्रसंवेगो योगी प्रवन्यासु योगयुद्धयोग्यासु गोषु योगभूमिषु अन्नमयप्राणमयमनोमयविज्ञानमयानंदमयाख्यासु सस्निः सरन् (?) तं तं कोशमुपसंक्रामन् यश्च महतीः अवनीः स्थूलाः भूमीः आ इत्यभिविधौ सर्वाः जुहोति अर्थात् सूक्ष्मा-

सु प्रविलापयतीत्यर्थः । न पुनरुत्तरामुपसंक्राम-
त्पूर्वामवशेषयतीति भावः । यत्र हूतं द्रुतं वारि-
वसमुद्रसलिलवदेकरसंवस्तु तत्र पूज्यासः यो-
गिनः अपादो अरथा इत्याध्यात्मिकाधिदैवि-
कालंबनशून्यत्वं लक्ष्यते तादृशा अपि द्रोण्य-
श्वासः नौशब्दस्य वाङ्नामसु पाठाव् द्रोणि-
शब्दिताः वाग्रूपानौरेवाश्ववत् गतिसाधनं येषां
ते दोण्यश्वासः तत्त्वमस्यादिवाक्यनौकाबलेन
ईरते गच्छंति आनंदमयम् उल्लंघ्य षष्ठे पुच्छ-
ब्रह्मणि वाक्यार्थावगतिबलेनैव प्रतितिष्ठंतीत्यर्थः
॥४॥ कृत्स्नं पूर्वोक्तमर्थमुपसंहरत्यर्धर्चेन सरुद्रे-
भिरिति । सः स्तुतः पुरुषः रुद्रेभिः रोदयद्भिरे-
कादशभिः षड्भिर्वा इन्द्रियशत्रुभिः संगतोऽशस्त-
वारः घोरसंसारयातनानिमित्ततया अमंगलदि-
वसो भवति । स एव पुनः ऋभ्वा देव्या विद्यया
आरे अवद्योनिरस्तानर्थो गयं स्वस्वरूपप्रतिष्ठा-

रूपमधिष्ठानम् आगात् इन्द्रिययोनो बंधः, विद्यया तन्नाशो मोक्ष इत्यर्थः। एवं वम्रस्य वम्रं प्रतिमिथुनामिथुनौ आत्मानात्मानौ विवव्री वि-वृतवन्तौ स्वस्वरूपमिति शेषः। एवं समाधौ जडात्पृथक्कृतमात्मानं जानन्नपि व्युत्थाने अन्नं स्थूलदेहम् अभीत्य अभिमुखं प्राप्य मुषायन्स्व-रूपानन्दमहरन् लब्धावसरः सन् अरोदयत् स एव रुद्रशब्दित इन्द्रियगण इत्यर्थात्। एतेन साक्षात्कृतात्मयाथात्म्यस्यापि दग्धपटवद्देहाद्य-ध्यासानुवृत्तेर्दुःखानुवृत्तिप्रदर्शनेन जीवन्मुक्तिः साधिता। अन्यथा ज्ञानसमकालमेव देहपातः स्यादित्यन्यत्र विस्तरः॥ ४॥ एवमाधिदैविका-द्इदस्यार्थादाध्यात्मिकमर्थं विशुद्धसत्त्वैकगम्यं भाष्यकारैः सत्त्वशुद्ध्यर्थं यज्ञतदंगादिस्तावक-तयाऽर्थो दर्शितः स भाष्यादेवावगंतव्यः॥ ५॥

पितुर्मातुरध्या ये समस्वरन्नृचा शोचन्तः संदहन्तो अव्रतान् ॥ इन्द्र-द्विष्टामपधमंति मायया त्वचमसिक्नीं भूमनो दिवस्परि ॥ ६ ॥

अथ इषुर्नधन्वीये मंत्रपंचके रामायणस्य उत्पत्तिनिमित्तं प्रदर्श्यंते तच्च नारदस्य तु तद्वाक्यमित्यादिना सर्गत्रयेण उपबृंहितं तस्य तात्पर्यं कपर्दकान्वेषिणा रत्नमिव रामकथान्वेषिणा परतत्त्वमभिलभ्यत इत्याख्यायिकामुखेन गम्यते । पितुर्मातुरिति पितुर्मातुश्चापेक्षया अधि अधिकं आ अत्यर्थं ये महान्तः जनहितं समस्वरन् सम्यग-कीर्तयन् बहुत्वं पूजायाम् येन रामायणं कृतं स माता पितृशतादप्याप्ततमो हितोपदेष्टत्वादित्यर्थः। कीदृशास्ते ऋचा द्वात्रिंशदक्षरया अनुष्टुभा शोचंतः शोकं कुर्वंतः शोकेन द्वात्रिंशदक्षरं वाक्य-

मुच्चारयंत इत्यर्थः । कीदृशाः अव्रतान् हिंस्रान् संदहंतः तेनैव शोकाग्निना भस्मीकुर्वंति ते संस्वरंतः स्वकृतेनैव संस्वरणेन मायया मूलविद्यया सार्धं असिक्नीं कृष्णवर्णां तमोमयीं त्वचं शरीरम् अपधमंति दूरीकुर्वंति श्रोतृणामित्यर्थात् । कीदृशीं त्वचम् इन्द्रद्विष्टाम् इन्द्र आत्मा द्विष्टो नानायोनिनिपातनेन दुःखवान् कृतो यया ताम् भूमनः भूलोकात्, दिवः द्युलोकाच्च परिपरिच्युतामित्यर्थः । मुक्तानां हि शरीरं लोकत्रयेपि नास्तीति स्पष्टम् "अशरीरं वा वसंतं न प्रियाप्रिये स्पृशतः" इति श्रुतेः ॥ ६ ॥

प्रत्नान्मानादध्यायेसमस्वरन् श्लोकयंत्रासो रभसस्य मंतवः ॥ अपानक्षासो बधिरा अहासत ऋतस्य पंथान्नतरंति दुष्कृतः ॥ ७ ॥

यत्प्रमाणमाश्रित्य ते समस्वरन् यया च ऋचा शोकमकुर्वन् यथा च ऋचः संस्वरणहेतुत्वम् एतत्त्रयं दर्शयति प्रत्नान्मानादिति । प्रत्नं पुरातनं मानं प्रमाणं वेदं वा 'स ईक्षत लोकान्नुसृजा' इति कालिकम् ऐश्वरमीक्षणं वाऽधिगम्य येधिअधिकं समस्वरन् श्रुतिं दिव्यां दृष्टिं वा प्राप्य रम्यं काव्यं कृतवंत इत्यर्थः । ते श्लोकयंत्रासः श्लोक एव यंत्रवत् काव्यकरणे प्रवर्तको येषां ते श्लोकयंत्राः शोकानुवादिकाया ऋच आलोचने कृते तस्याः श्लोकरूपत्वं दृष्ट्वा ईदृशैरेव श्लोकैर्नारदोपदिष्टं पुरुषं वर्णयामेति प्रवृत्ता अभूवन्नित्यर्थः । एतेन शोचिलोकिकायिभिः( ? ) श्लोकशब्दो निष्पन्न इति दर्शितम् । अत्रापि बहुत्वं पूजायाम् । शोकानुवादिनीमव्रतदाहिकामृचं पठंति—रभसस्येत्यादि । अत्र 'इयादिपूरणः' इति स्मृतेरनुष्टुप्छंदसि ...मक्षरस्य इत्यत्र सिय इति वर्णद्वयकल्पनया

रणीयं तेन रभसरयेत्यादयो दुष्कृत इत्यंताः द्वात्रिंशत् वर्णा भवंति अत्राकार्यं दृष्ट्वा शोकस्तत्कारिणः शापश्च दृश्यते । यथा—रभसस्य तव:चित्तनदीवेगस्य मानयितारः, । कामक्रोधादिवशाः अनक्षासः कार्याकार्यविवेकाभावाधाः बधिराः शास्त्रश्रवणहीनाः । ऋतस्य सत्यस्य यथा मार्गम् अप अहासत दूरे त्यक्तवंतः। अत एव दुष्कृतः पापफलात् नरकान्न तरंति न लंघयंति । तस्मादरे अकार्यकारिन्नव्रतत्वमपि दुष्कृतं न तरिष्यसीति भावः । एतदर्थकश्च श्लोको रामायणे दृश्यते—“मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः । यत्क्रौंचमिथुनादेकमवधीः काममोहितम्”इति ।अत्र ‘यद् गायत्री च पंक्तिश्च ते द्वे अनुष्टुभौ’ इति श्रुतेश्चतुर्विंशतिचत्वारिंशदक्षरतया चतुःषष्टयक्षरयोर्गायत्रीपंक्त्या यथा “द्वे अनुष्टुभौ द्वात्रिंशदक्षरे भवतः” एवं जगत्या-

गमेऽपि रभसस्येत्यादिरनुष्टुबस्ति । यद्वा रभसस्य मंतवोपेत्यानुष्टुप्पादः अनक्षेत्यादि त्रिष्टुप्पादः ऋतस्येत्यादिर्जगतीपाद इति वा पादकल्पनया सर्ववृत्तसंभवोऽत्र द्रष्टव्यः । तथा च श्रुतिः—"एतानिवाव सर्वाणि छंदांसि गायत्रं त्रैष्टुभं जागतमानुष्टुभमाचन्यातिं"इति ( ? ) ॥ ७ ॥

**सहस्रधारे वितते पवित्र आवाचं पुनंति कवयो मनीषिणः ॥ रुद्रास एषामिषिरासो अद्रुहः स्पशः स्वंचः सुदृशो नृचक्षसः ॥ ८ ॥**

अत्र संस्वरणं मधुरस्वरेण गानं कोकिलवदिति ध्वनितम् तस्योपबृंहणम् 'कूजंतं रामरामेति' श्लोके श्लोकदर्शनप्रवृत्तैस्तैःकिं कृतमतआह—सहस्रेति ।आसमंतात् वितते व्याप्ते महाविष्णौ सहस्रधारे सोमांशुरूपेण तत्तदिन्द्रियवृत्त्य-

भिव्यक्तचिदा सा सद्रूपेण वानंतप्रवाहे पवित्रे पावने निमित्तभूतेसति मनीषिणो जितचेतसः कवयः काव्यरचनसमर्थाःवाचं स्वीयां पुनंति भगवद्गुणगंणकीर्तनेन पवित्रीकुर्वंति वाल्मीकिप्रभृतयः । एषां कवीनां मध्ये रुद्रासः बहुत्वं पूजायाम् रुद्रो हनूमान् इषिरासः इषिरोद्भुतगतिः अद्रुहः अद्रोहीस्पशः चारः सीतान्वेषकश्चरोभूदित्यर्थः । स च स्वंचः शोभनगमनः । सुदृशः सम्यक्परीक्षकः । नृचक्षसः नरं सीतारूपं चष्टे पश्यतीति नृचक्षाः सीतां ददर्शेत्यर्थः ।वभ्रवत् रुद्रोपि रामायणमकरोत्तत्र च रामदास्यमधिकम् । एवमन्योपि रामस्तोत्रेण वाचं दास्ये न देहं च पुनीयादिति भावः ॥ ८ ॥

ऋतस्य गोपा न दभाय सुक्रतुस्त्रीषप विश्राहृद्य (?) न्तरादतधे ॥ विद्वान्स

विश्वा भुवनाभि पश्यत्यवा जुष्टान्वि-
ध्यति कर्ते अव्रतान्॥ ९ ॥

एवं परमेश्वरे वाचं पुनानस्य किं फलमत
आह—ऋतस्येति । य एवंविधो भवद्गुणगानेन
वाचं पुनाति स ऋतस्य गोपाः दंभाय न भवति
आत्मतत्त्वस्य रक्षकः विद्यामाहात्म्यादन्यैर्दंभ-
नाय अभिभवितुं न शक्यते, निर्भयो भवत्य-
भयं प्राप्तो भवति इत्यर्थः । यतः सुक्रतुःशोभना-
ध्यानपरः स एवंभूतः त्री त्रीणि पवित्राणि [illegible]
हृदि आदधे आहितवान् । तान्ये[illegible]
निति । स विद्वान् आत्मज्ञो भूत्वा कोकिलव-
नानि अभितः साकल्येन पश्यति रामरा-
अजुष्टान् अप्रीतान् दीनानित्यर्थः कृतमत-
अतिशयेन पालयति-"क्रियासमभिहारे महावि-
लोटो हिस्वौ"इति लोट् तस्य च हि[illegible]

हे: ' इतिहेलुंकू च तथा—अव्रतात् कर्मब्रह्मोभय-भ्रष्टारं कर्तं कृतंति छिंदंत्यस्मिन् इति योगात् संग्रामे विध्यति तेन पापिष्ठेनापि संग्रामे शस्त्र-मरणप्रापणेन उद्धरतीत्यर्थः । तस्य ज्ञानं दया शौर्य च लोकोपकारार्थं वर्धत इत्यर्थः । एता-न्येव हि त्रीणि पवित्राणि अन्यत्राप्युक्तानि—"न हि ज्ञानेन सदृशं पवित्रमिह विद्यते, न दयास-दृशो धर्मः' लोकान्प्रयान्तु रिपवोपि हि शस्त्रपू-ताः" इति निग्रहमुखोनुग्रहः शत्रुष्वपि परमो धर्म इत्यभिप्रायः ॥ ९ ॥

ऋतस्य तंतुर्विततः पवित्र आ [illegible]ह्वाया अग्रे वरुणस्य मायया ॥ धीरा[illegible] त्-त्समिनक्षंत आशतात्राकर्तमवपदात्य प्रभुः ॥ १० ॥

अथ रामकथापरं स्तुवन्नन्यं निंदति ऋतस्य तंतुरिति । ऋतस्य परमात्मनः प्रापको गंतुं तंतुरिव तंतुरूर्ध्वपदारोहणसाधनः—"स यथोर्णनाभिस्तं तुनोच्चैरीत" इति मैत्रायणीयश्रुतिसिद्धोयं दृष्टांतः । विष्णौ वाचः पवनरूपः कवीनां जिह्वाया अग्रे स्थितो वरुणस्य भोगमोक्षार्थिभिर्वरणीयस्य विष्णोर्मायया आ अत्यंतं विततो विस्तारितः श्रीरामकथारूपोस्ति वरुणस्य जिह्वाया अग्र इति वा योज्यम् वरुणपुत्रस्य प्राचेतसापरनाम्नो वाल्मीकिरित्यर्थः । धीराश्चित् ध्यानवन्त एव, तत् तं तंतुं समिनक्षंतः सम्यक् कात्स्न्र्येन व्याप्नुवंतः न त्वेकदेशेन आशत प्राप्नुवन् । अत्र रामकथाधिगमे स्वाधीनेपि यः अप्रभुः जिह्वां व्यापारयितुमशक्तः, स कर्तम् हिंसास्थानं अपिपत्रवनारण्यं नरकं अवपदाति नीचैरवपद्यते। 'पद-गतौ' लेटि । आडागमः । तामेव रामकथां

प्रस्तौति तां सुत इत्यादिना। सूक्तत्रयेण अत्रानुक्रमणी तां सुषट्, बृहदुक्थो, वामदेव्यो, दूरेष्ठा, त्रिदंते सप्त, वैश्वदेवं तु चतुर्थ्याद्यास्तिस्रो जगत्यः पूर्वयोरिन्द्रो देवता त्रिष्टुप्छंदः हे मघवन् धनवन् लक्ष्मीपते तां प्रसिद्धान्ते तव सुकीर्तिं शोभनं यशो महित्वा माहात्म्येन ब्रवीमीति शेषः ॥१०॥

तां सु ते कीर्तिं मघवन्महित्वा यत्वा भीते रोदसी अह्वयेताम् ॥ प्रावो देवाँ आतिरोदासमोजः प्रजायै त्वस्यै यद-शिक्ष इन्द्र ॥ ११ ॥

तामेवाह—यदिति यत् यदा त्वा त्वां भीते राक्षसेभ्यस्त्रस्ते रोदसी द्यावा पथिवीस्थे प्रजे त्राहीति आह्वयेताम् आहूतवत्यौ तदा त्वं देवान् प्रावः प्रकर्षेण पालितवानसि दासं च रावणादिरूपं पूर्वं जयविजयादिसंज्ञं स्वपार्षदम् ओजः

ओजसा सामर्थ्येन अतिरः तिरस्कृतवानसि । वधप्रापणेन तथा त्वस्यै अन्यस्यै प्रजायै मानुष-रूपायै राजा भूत्वा हे इन्द्र परमेश्वर यत् अशिक्षः अशिक्षयः वर्णाश्रमधर्मांश्च शिक्षितवानसि । तां ते कीर्तिमित्यन्वयः । अत्र रोदस्युद्वेजकदशास्यक्षपणकमुचितं प्रजाशिक्षकत्वं मुख्यं रामादन्यत्र भगवदवतारांतरे नास्ति । यद्वा—अभिषेकानंगीकारात् इन्द्रे चासकृत्पराभवदर्शनान्न मुख्यं मघवत्त्वं श्रुतिप्रसिद्धेन्द्रशब्दार्थभागित्वं चास्ति, अतो नान्यपरो मंत्रः । किं चात्र तां सु ते कीर्तिमित्यारभ्य स्वां प्रजां बृहदुक्थो महित्वावरेष्वदधादापरेष्वित्यंतानामेकविंशतिमंत्राणाम् उपक्रमपरामर्शोपसंहारेषु रामलिंगान्येव दृश्यंते । तत्रोपक्रमोऽव्याख्यात एव, उपसंहारेऽपि बृहदुक्थो महाकर्मा रामः स्वां प्रजां संतानरूपां च महित्वा स्वप्रभावेनालौकिकेन क्रमादवरेषु भूस्थानेषु

आदधात् । परेषु वैकुंठस्थानेषु च आदधादिति प्रजानां नेतृत्वं राम एव दृष्टम् । अत्र बृहदुक्थऋषिः प्रत्यगभिन्नस्य रामस्य कर्माण्यात्मन्यारोप्य वदति । अहं मनुरभवं सूर्यश्चेत्यादि वामदेववत् अन्ये चात्रमप ( ? ) स्था मंत्राः कथाक्रमेण यथास्थानमेव व्याख्यास्यंते। अध्यात्मं तु द्वय्याहप्राजापत्या देवाश्चासुराश्चेति बृहदारण्यकादौ शमदमादिषु देवपदप्रयोगात् कामादिषु चासुरपदप्रयोगात् इत्थमस्य मंत्रस्यार्थः प्रत्येतव्यः । सकलसंसारानर्थमूलात्कामाद्भीतैर्देवमनुष्यैः शरणीकृत ईश्वरः कामं हत्वा शमादींस्त्रातवान् मुमुक्षूंश्च सदाचार्यरूपेण तद्व्यवहारं शिक्षितवानिति दिक् ॥ ११ ॥

आसूर्यो यातु सप्ताश्वः क्षेत्रं यदस्यो र्विपादीर्घपांथे रघुः ॥ श्येनः पतय-

दंधो अच्छायुवाकविर्दीदयद्गोषु गच्छन् ॥ १२ ॥

आह्वानं विवृणोति—आसूर्यं इति। यत् क्षेत्रं शरीरम्‌अस्य आगंतुःउर्विपाश्रेष्ठत्वेन,अभिमतम्‌, दीर्घपाथे महति संसारमार्गे, तत् सूर्यःसप्ताश्वः स्वसंतानरूपेणायातु सूर्यवंशे शरीरं धारयत्विस्यर्थः। तत्रापि रघुः रघुवंश्यो भूत्वा,श्येनः ईश्वरः पक्षी,अंधो अच्छ अन्नमयं पिंडमभिमुखः पतयत् पततु। स च युवा कविश्च सन् गोषु भूप्रदेशेषु गच्छन् संचरन्, दीदयत् दीप्यताम्, रघुवंशे शरीरं धृत्वास्मानवत्वित्यर्थः। पक्षे सूर्यवत्सर्वावभासकबोधरूपी श्येन ईश्वरः रघुः तद्भावतोन्यानत्येतीति श्रुत्यंतरात् शीघ्रगतिः नरम् आयातु स च बोद्धा धीबलात् सनकादिवद्युवा कविश्च सन् लोकाननुगृह्णातु। सप्ताश्वत्वं

तु यमनियमासनप्राणायामप्रत्याहाराख्याःपंच-धारणाध्यानसमाध्यात्मकः संयमः,षष्ठःप्राणायामः, प्रत्याहारो ध्यानम् धारणा तर्कः, समाधिः षडंगा इति मैत्रायणीयश्रुतेस्तर्कश्चोपसंहार्य इति सप्त अश्वा आगमनसाधनानि यस्य स सप्ताश्वः शेषं प्राग्वत् ॥ अत्रापि आशृण्वतीण्य इति आज्ञाकारी समुद्र इति तन्नियंतृत्वमनंतरमंत्रे श्रुतं रघुपदसमुच्चितं रामे एव दृष्टम् । नान्यत्रागस्त्ये ऽन्यत्र रघुवंश्ये वा इति दाशरथिपरत्वमेवास्यमंत्रस्यावसेयम् ॥ १२ ॥

स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु ॥ चित्रः शिशुः परितमांस्यक्तून्प्रमातृभ्योधिक निक्रदद्गाः ॥ १३ ॥

एवं प्रार्थितस्येश्वरस्य वह्निरेव शरीरत्वं गत इत्याह सजात इति । हे अग्ने त्वं रोदस्योर्द्यावा-

पृथिव्योरेव मध्ये न तु मातापित्रोः शरीरे शुक्र-
शोणितरूपेण गर्भो जातोसि । यतः ओषधीषु
आग्नेयचरुरूपासु बिभृतः मंत्रविद्भिर्धृतः चारुः
सुन्दरः चित्रोनेकाश्चर्यमयः, शिशुः तमांस्यक्तून्
तमोमयीर्मोहरात्रीः परिमोहहीनः परिरत्नवर्ज-
नार्थः । चरुरूपी शिशुः मातृभ्यः कौशल्यादि-
भ्य एताः प्राप्य । अधिकनिक्रदत् आह्वयन्
प्रप्रकर्षेण अधिगाः अधिगतवानसि । कर्मसंभृ-
तचरुप्राशनमात्रादेव गर्भधारणोक्तेरलौकिकं
रामस्य जन्मेति दर्शितम् । अत्रापि भद्रो भद्रया
सच मान आगात्स्वसारं तारो अभ्येति पश्चात्
सुप्रकेसैर्द्युभिरग्निर्वितिष्ठन्रुशद्भिर्वर्णैरभि राममस्था-
दिति षोडशे मंत्रे लिंगदर्शनात् । बहुमातृक-
त्वसमुच्चितो रामशब्दो नैकमातृके जाम-
दग्न्ये द्विमातृके वासुदेवे वा समवेति दाश-
रथिपर एवायं प्रघट्टकः; तत्रापि कतिपये मंत्रा

कथोपयोगिनो यथास्थानमेवोदाहृत्य व्याख्या-
स्यंते । पक्षेऽग्निर्विज्ञानधातुःस हि इष्टादिकारिणां
स्वर्गतानां कर्मशेषेण भूमिमुपेयुषां वृष्टिद्वारा
ओषधिसंपर्कं प्राप्तानामनुशायिनां संबंधी भूत्वा
प्रथममोषधीषु बिभृतः सन् पश्चाद्रोदस्योर्द्यावा-
पृथिव्योः द्यौः पिता पृथिवी मातेति मंत्रवर्णात्
मातरि शोणितरूपेण पितरि रेतोरूपेण परिणतः
सन् तयोः संयोगान्मातृभ्यो जातो भवति,
ते ओषधिसंबंधेन पूर्वजन्मालिंगेन मातृभ्य
इति बहुवचनेन च संसारस्यानादित्वं दर्शितम्।
चित्रः शिशुर्जातः सन् तमांस्यक्तून् परिदेहाद्यात्म-
बुद्धिरूपा अज्ञानरात्रीः परिप्राप्य दुःखितोऽस्तीति
प्रकर्षेण कनिक्रदत् रुदन् अधिगाःअधिगतवा-
नसि ॥ अत्र विज्ञानस्यैव तमोभिभूतत्वं भोगभा
क्त्वं शोकभाक्त्वं चोक्तम् ॥ १३ ॥

विष्णुरित्था परमस्य विद्वाञ्जातो बृहन्नभि याति तृतीयम् ॥ आसा-यदस्य पयो अक्रत स्वं सचेतसो अभ्य-र्चन्त्यत्र ॥ १४ ॥

एवं मातृभिश्च रुद्रप्राशने कृते सति किमभूत्त-दाह—विष्णुरिति । विष्णुर्नारायणः एवमस्याग्नेर्ग-र्भभूतस्य परमं रक्षोवधाद्युत्कृष्टं चिकीर्षितं विद्वान् जानन् जातस्तत्र गर्भे आविर्भूतः जलचन्द्रवत् स च बृहन् ब्रह्मैव सन् विद्वान् गुणान् तमआ-दीन् अस्पृशन्नेव ॥ तृतीयं शुद्धकारणापेक्षया त्रयाणां पूरणं कार्यदेहम् अभियाति धत्ते । अस्य विग्रहस्य आसा आस्ना आस्येन एतद्रूपभजन-द्वारेत्यर्थः । 'पद्दन्' इत्यादिना आस्यशब्दस्या-सन्नादेशो सुपांसुलुगिति तृतीयैकवचनस्य डादेशः। पयः क्षीरादि स्वं स्वीयम् अक्रत कृतवन्तः, उप-

मन्युप्रभृतयो भक्ता इति हेतोः सचेतसो धीमन्तोऽत्रैव तृतीये रूपे श्रद्धालवोविष्णुमभ्यर्चन्ति। एतेनास्य भक्तानुग्रह एव मुख्यं प्रयोजनम् दुष्टनिग्रहस्तु तच्छेषभूत इति गम्यते ॥ पक्षे विष्णुरन्तर्यामी परमं मोक्षरूपं प्रयोजनम् अस्येत्यादि सर्वनामत्रयस्य मानुषदेह एवार्थः शेषं सुगमम् ॥ १४ ॥

अत उ त्वा पितुभृतो जनित्रीरन्नावृधं प्रतिचरंत्यन्नैः । ता ईं प्रत्येषि पुनरन्यरूपा असित्वं विक्षु मानुषीषु होता ॥ १५ ॥

अत इति—अत उक्तहेतोस्त्वा त्वां विष्णुम् उनिश्चितं पितुभृतोऽन्नपुष्टाः जनित्रीर्मातरः अन्नावृधं विराजोपि वर्धकं अन्नैः क्षीराद्यैः प्रतिचरंति पुष्यन्ति ॥ ताः मातॄः त्वं पुनरन्यरूपाः

पूर्वमाराधयित्रीः सतीः पश्चादाराध्यरूपाः सम्प्र-त्यन्वेषि आराधयसि ॥ यतस्त्वं मानुषीषु विक्षु प्रजासु होतासि यज्ञादिसदाचारप्रवर्तकोसि । अतो मातृर्दैवतावन्मानयसीत्यर्थः ॥ पक्षे त्वत्तः सुखाशावतीर्मातृः दुःखिताः सतीरन्वेषि । एतेन निषिद्धकर्माचरणतो मोह उक्तः ॥ अक्षर योजना स्पष्टा । अन्नावृधम् अन्नावृधम् । विश्वायुपमिति निपातनाद्दैर्घ्यं पूर्वपदांतस्य ॥ १८ ॥

तिस्रो मातृस्त्रीन् पितॄन्बिभ्रदेक ऊर्ध्व स्तस्थौ नेमवग्लापयंति । मंत्रयन्ते दिवो अमुष्य पृष्ठे विश्वविदं वाचम-विश्वमिन्वाम् ॥ १६ ॥

जनित्रीणामाकांक्षितं संख्याविशेषमाह—तिस्र इति । तिस्रः कौशल्याकैकेयीसुमित्रासंज्ञाःमातृः त्रीन् पितॄन् जनयितारं दशरथम्,वशिष्ठमुपनेता-

रम् विश्वामित्रं विद्याप्रदातारं चेति त्रीन् बिभ्रत् पालयन् त्रिमातृकत्वादनेकदेहोऽपि एक एव ऊर्ध्वं विज्ञानधर्मेषु शोकायासादिष्वनिमग्न एव तस्थौ ॥ अत एव ईं एनं ते मात्रादयः न अवग्लापयंति ग्लपयन्ति ॥ ग्लापयंतीत्योर्दैर्घ्यम्॥ देहप्रदानाद् तत्कृतेन दुःखेन नाभिभवन्ति। अत्र हेतुमाह—मंत्रयन्त इति। दिवःपृष्ठे मेरुमूर्धनि अमुष्य प्रतिपादिकां वाचम् उपनिषदं ब्रह्मादयो मन्त्रयन्ते विचारयंति। विश्वं वेदयति तां विश्वविदम्। अविश्वमिन्वां विश्वस्माद्व्यावृताम्। एकविज्ञानात्सर्वविज्ञानप्रदायाः नेति नेतीति मूर्तामूर्तप्रपंचनिषेधिकायाः ब्रह्मादिभिरप्यन्वेषणीयायाः वाचो विषयमिमं मात्रादिजो देहो न बध्नातीत्यर्थः। अत्रापीश्वरस्य सतःत्रिमातृकत्वं दाशरथावेव दृष्टम्।पक्षेतिस्रो मातरः समष्टिस्थूलसूक्ष्मकारणरूपा उपाधयः। त्रयः पितरस्तदभि-

मानिनश्चिदाभासाः वैश्वानरहिरण्यगर्भान्तर्यामिसंज्ञाः । तज्जो विज्ञानधातुरपि व्यष्टिस्थूलसूक्ष्मकारणरूपेण त्रिविधः तदभिमानिनश्चिदाभासा अपि त्रयो विश्वतैजसप्राज्ञसंज्ञाः ॥ एतेषामधिष्ठानभूतोपि न विक्रियत इत्यर्थःअक्षरयोजना पूर्वोक्तैव ॥ १६ ॥

चत्वारि ते असुर्याणि नामादाभ्यानि महिषस्य सन्तिात्वमंगताानि विश्वाानि वित्से येभिःकर्माणि मघवञ्चकर्थ॥१७॥

बहुमातृकस्यापेक्षितं रूपभेदं तां सुतीयमंत्रेणाह–चत्वारि त इति । नाम निश्चितम् । नामोपलक्षितानि रूपाणि वा । विभक्तिलोप आर्षः चत्वारि रामलक्ष्मणभरतशत्रुघ्नाख्यानिअसुर्याणि असुराणामप्युक्तरीत्या हितानि अदाभ्यानि अनभिभाव्यानि महिषस्य महतस्तव सन्ति । हे

अंग तानि विश्वानि सर्वाणि नामानि त्वं त्वमेव वित्से लभसे ॥ येभिर्यैः रूपैः मघवन् लक्ष्मीपते कर्माणि इन्द्रजिल्लवणवधादीनि चकर्थ । लक्ष्मणादयस्त्वत्तो नातिरिच्यन्ते, मृद इव बीजांकुरद्रुमा इत्यर्थः । अयं भावः—यथा कौशल्याकैकेयीभ्यामर्धमर्धं चरुं प्राप्य स्वस्वचरुभागस्यैकैकोंशः सुमित्रायै दत्तः ॥ तेन सुमित्रा द्वौ पुत्रौ लेभे ॥ इतरे त्वेकमेकमेवेति चत्वारः पुत्राः, एवं कार्यकारणरूपयोर्विराडंतर्यामिणोर्मध्ये सूत्रात्मा उभयधर्मानुसारीति तत्र प्रतिफलितं चैतन्यमप्युभयविधं तत्र कार्यांशप्रतिबिंबः शत्रुघ्नः, कार्योपाधिं भरतमन्वेति । कारणांशप्रतिबिम्बो लक्ष्मणः, कारणोपाधिं राममन्वेति ॥ १७ ॥

अमंदान्स्तोमान्प्रभरे मनीषासिंधावधिक्षियतो भाव्यस्य ॥ यो मे सहस्र-

अमिमीतसवानतूर्तो राजा श्रवइच्छमानः ॥ १८ ॥

तिस्रो मातॄस्त्रीन् पितॄनित्युक्तं तत्र मुख्यं पितरं मुख्यां मातरं चाह। अमंदानिति सप्तर्चेन सूक्तेन। तत्र प्रकृतोपयोगि मंत्रचतुष्टयं व्याक्रियते। भाव्यपुत्रेण स्वनयापरनाम्ना रथदशकप्रदानाद्दशरथाख्यत्वं गतेन राज्ञा तोषितः कक्षीवान्वक्ता, अमंदानिति कक्षीवान् दानतुष्टः पंचभिर्भावयव्यं तुष्टावांत्ये अनुष्टुभौ भावयव्यरोमशयोर्दंपत्योः संवाद इति अनुक्रमणिकायां भावयव्य इति चतुरक्षरं नामावगतम्, तत्र मध्यमवर्णद्वयलोपेन भावयव्य एव भाव्यः, तत्रेयमाद्या ऋक् अमंदानिति। तस्य भाव्यस्यार्थे अमंदान् मानुषत्वे जीवभावाप्राप्तेरमूढान् स्तोमान् स्तुत्यान् वंशसंघान् पुत्रानित्यर्थः। मनी-

षया संकल्पेनैव प्रभरे प्रकर्षेण संचिनोमि।
कीदृशान् सिंधौ समुद्रेपि अधि अधिकं क्षियतः
ऐश्वर्ययुक्तान्, उपरि सेतुं कृत्वा निवसत इति वा।
समुद्रदमनसमर्थान्पुत्रान्भाव्यस्यार्थे कल्पयामी-
त्यर्थः। यो भाव्यो मे मह्यं सहस्रं गवाम् अमि-
मीत संख्यातवान् दातुं सर्वान्। वर्णद्वयलोप
आर्षः। सननं विभजनं दानं तद्वान्। अतूर्तो
ऽहिंसितः श्रवः कीर्तिम् इच्छिमानः सवान् यज्ञा-
निति। यथा भाष्यं वा॥ १८॥

उप मा श्यावाः स्वनयन दत्ता वधू-
मन्तो दशरथासो अस्थुः। षष्टिःसह
स्रमनु गव्यमागात्सनत् कक्षीवाँ अ-
भिपित्वे अह्नां॥ १९॥

उपमेति—स्वनयेन राज्ञा दत्ताः श्यावाः कृष्ण
काष्ठजाः दशरथासो रथाः वधूमन्तः प्रत्येकं श-

कटीयुक्ताः मा उपास्थुः मम समीप स्थितवन्तः । तथा—षष्ठिः सहस्रं गव्यं गोयूथं च रथानन्तु आगात् आगतं मां प्रति, अतः कक्षीवानहं अह्नांक्रतून् अभिपित्वे सर्वतः पालयितारि सत्पात्रे, ईश्वरे वा सनत् धनानि विभजन् अस्मीति शेषः । दशरथपदप्रवृत्तिनिमित्तं प्रागुक्तं ज्ञापयः प्रसंगादुपन्यस्तः ॥ १९ ॥

चत्वारिंशद्दशरथस्य शोणाः सहस्रस्याग्रे श्रेणिं नयन्ति ॥ मदच्युतः कृशनावतो अत्यान्कक्षीवन्त उदमृक्षंतपज्राः ॥ २० ॥

चत्वारिंशदिति—दशरथस्य राज्ञो यज्ञे लब्धाः चत्वारिंशत्संख्याः शोणा अरुणाश्वाः सहस्रस्य सहस्राश्ववाह्यस्यापि रथस्याग्रे पुरस्तात् श्रेणिं रथनेमिपंक्तिं नयन्ति प्रापयन्ति, अतिवेगव-

त्त्वात् तांश्च मदच्युतः श्च्योतन्मदान्, कृशनाः
वतः कृशनं कर्शनं नियंत्रणं तद्वतः सुशिक्षिता
नित्यर्थः । अत्यान् अतिक्रम्य गन्तुमर्हान् मंडूक-
गतीनित्यर्थः । कक्षीवन्तः पुत्राः उदमृक्षंत
सादिनो भूत्वाऽश्वगुणसंतुष्टाः स्कंधदेशे मार्जित-
वन्तः प्रेम्णा परामृशन्नित्यर्थः । यतः पूर्वं पज्राः
पद्भ्यामेव जीर्यन्त इति पज्राः पादचारेण खिन्नाः
पक्षे पूर्वं ब्रह्मणि षण्णामुपाधीनां चिदाभासानां
चारो यउक्तः तदपवादेन निर्विशेषं वस्त्वधिगन्तुं
योग्यतासिद्ध्यर्थममंदनितिमंत्रद्वयेन दशरथ-
स्य दानादिकमुक्तम् तेन योतिमहति कुले जातः,
महांति यज्ञदानादीनि करोति स एव ब्रह्मज्ञान-
योग्यो भवतीति गम्यते । तथा च श्रुतिः—"वि
विदिषन्ति यज्ञेन दानेन" इत्यादि । तृतीये तु
मंत्रेऽपवाद उच्यते, तत्रायमक्षरार्थः-दशभिरिन्द्रि-
याश्वैर्युक्तो मनोमयः कोशो दशरथः, तस्य च

शोणाः रागाः प्रतीन्द्रियार्थं प्रसुप्ततनुच्छिन्नोदारभेदेन चतूरूपाः सन्तश्चत्वारिंशत्, ते च तावन्तोपि सहस्याग्रे सहस्रादप्यधिकं श्रेणिं रागपंक्तिं नयन्ति प्रापयन्ति, विषयाणामानंत्यादनन्ता इत्यर्थः। "अनन्तं वै मनः" इतिश्रुतेः। मदच्युत इति-तेषामुदारावस्था। कृशनावत इति-कृशनं कार्श्यं तद्वत इति तन्ववस्था। अत्यानीति प्रसुप्तविच्छिन्नावस्थे च दर्शिते तांश्च ... नि् कक्षिवन्त उदमृक्षन्त पांसुरेखावदुन्मार्जि- ...ः। यतः वज्राः इन्द्रियाश्वान्नारोहन्तीत्यर्थः। एतेन इन्द्रियनिर्मुक्तमनोमात्रावस्थानेन योगिनः स्वप्नस्थस्येव अन्नमयप्राणमययोरप्रतिसंधानेन प्रविलय उक्तः॥ २०॥

उपोपमे परामृशमामेदभ्राणि मन्यथाः॥ सर्वाहमस्मि रोमशा गंधारीणामिवाविका॥ २१॥

एवं कक्षीवता दशरथस्य पुत्रप्रदाने संकल्पिते दशरथः स्वभार्याया व्रतदार्ढ्यं संदिहानस्तया प्रबोध्यते—उपमेति । पादपूरणार्थमुपसर्गस्य द्वित्वम्। मे मम उपोपसमीपे परामृश इयं दृढव्रतास्ति नवेति मदीयैर्लक्षणैर्विचारय। मे मम-व्रतानि दभ्राणि अर्धस्थितानि मा मन्यथाःमा जानीहि ॥ यतोहं सर्वा कृत्स्ना रोमशा रोमाणि शातप्रतिविधूननेन दूरीकरोतीति रोमशा अश्वा सेव शातितदोषोऽस्मि—"अश्वा इव रोमाणि विधूय पापम्" इति श्रुत्यन्तरप्रसिद्धोयं दृष्टान्तः। यथा गंधारीणां गंधारदेशीयानामविका बहुलोमापि अविपालैः शातितलोमा क्रियते तथास्मि। अत्र केचिद्रोमशापदेन रोमवत्यस्मीति व्याचक्षते तद्विगीतत्वादुपेक्ष्यम्। "सर्वास्ता रोमशाः कृधि" इत्यत्र अपालामिन्द्रस्त्रिपूतत्वं कृणोः सूर्यत्वचमित्यनंतरमन्त्रेऽपालायाः त्रिःशोध-

नेन सूर्यसमत्वमकरोः, तथा ममापि तानि स-
र्वाणि उर्वरादीनि पूर्वमंत्रोक्तानि प्ररोहार्थं शोध-
यित्वा दीप्तिमंति कुर्विति समुदायार्थः प्रतीयते,
स एवात्रापि ग्रहीतुं युक्तः रोमशेत्यव्युत्पन्नं प्राति
पदिकम् ॥ अन्यथा मत्वर्थीयशप्रत्ययान्तत्वे
पदकाले एव गृह्येत अवांतरपदसंज्ञायाः सत्त्वा-
दिति दिक् । पक्षे बुद्धिमालिन्ये सति बाह्येंद्रिय-
वियुक्तमपि मनः स्वप्नेपि महांतमनर्थं सृजति,
अतस्तस्यां शुद्धायाम् अस्मितामात्रावशेषायां
सर्वसंकल्पोपरमान्मनोमयस्य अहं कर्तेति अभि-
मानाभावान्मनोमयस्य विप्रविलापनं कृतं भवति
कुशलैव कौशल्या तत्त्वप्रतिपत्तियोग्येति योर्थः
कौशल्यापदेनोक्तः, स एवात्र रोमशापदेन गृहीत
इति कौशल्यायाः नामान्तरं रोमशेति । तथा
ऋष्यशृंगस्य नामान्तरं कक्षीवानिति । एवमादि
तत्तन्नियोगानुष्ठानवशादुन्नेयम् ॥ २१ ॥

**महाँऋषिर्देवजा देवजूतो अस्तभ्ना त्सिंधुमर्णवं नृचक्षाः । विश्वामित्रो यदवहत्सुदासमप्रियायत कुशिकेभिरिन्द्रः ॥ २२ ॥**

तदेवं रामभद्रादीनां चतुर्णां जन्म वर्णितं तेषु काकपक्षधरेषु यज्ञविघ्नापनोदनार्थं रामलक्ष्मणौ याचितुं दशरथं प्रति विश्वामित्र आजगामेति कथासूचकं मन्त्रमाह—महानिति । महान् पूज्यः, ऋषिर्नारायणः, देवजः राज्ञः सकाशादाविर्भूतः देवजूतः देवाः इन्द्रादयः, इन्द्रियाणि वा जूताः प्रेरितानि येन स देवजूतः । सिन्धुं स्यंदमानमर्णवं समुद्रम् अस्तभ्नात् स्तंभितवान् । नृन् चष्टे अनुकंप्यत्वेन पश्यतीति नृचक्षाः इन्द्रियद्रष्टा वा "चक्षुषश्चक्षु" इति श्रुतेः ॥ तमृषिं सुदासं वशिष्ठः "सुदासं पैजवनमभिषिषेच" इति

ब्राह्मणाद्दशिष्टयाज्यस्य मुख्यस्य सुदासोऽत्र ग्रह-
णायोगात् सुदासस्य राज्ञो गोत्रे भवं रामं विश्वा-
मित्रः स्वज्ञयं त्रातुं यत् अवहत् यज्ञवाटं प्रति
प्रापितवान् तेन कर्मणा इन्द्रः कुशिकैः कुशिक-
संतत्या अप्रियायत अविघ्नेन,यज्ञे हवींषि भोक्ष्या
मीति हर्षं प्राप्तवान् । पक्षे विश्वामित्रो जीवः
आनंदमयं शोधितत्त्वं पदार्थमात्मानं गोणकर्म
सुदासं रामाख्यं पुच्छं ब्रह्म प्रापितवान्, अतः
ब्रह्मनिष्ठैः कुशिकैरिन्द्रोऽप्रियायत—"आत्मा ह्येषां
स भवति" इति श्रुतेः । ब्रह्मिष्ठो ब्रह्मनिष्ठो देवाना-
मात्मभावं गतस्तेषां प्रियतमो भवतीति भावः ।
एतेनानंदमयस्य प्रविलय उक्तः । तमेतं मुमुक्षुं
प्राप्यमात्मानमज्ञात्वा यः कर्म करोति, तत्तस्य
नश्यतीति रामं प्रति विश्वामित्रागमनेन सूचि-
तम् । श्रुतिश्चैतदाह "यो वा एतदक्षरं गार्ग्यवि
विदित्वाऽस्मिंल्लोके जुहोति यजति ददाति'

माध्यंदिन पाठे—"तपस्तप्यते" इत्यपि, "बहूनि वर्षसहस्राण्यंते यदेवास्य तद्भवतीति" इति अत्राप्यर्णवस्तंभनम् विपिबध्वं कुशिकाः सोम्यं मध्विति राजवृत्रं जंघनप्रागपागु-दगिति च सोमपानाभ्यनुज्ञानं सर्वदेशीयवृत्रहननं च वक्ष्यमाणं विश्वामित्राद्बलातिबलयोर्ग्रहणं चेति सर्वं राम संगतम् ॥ एवमन्यदपि लिंगवि-शेषोपेतं मंत्रजातमुदाह्रियते न निर्लिङ्गं हठादाकृ-ष्यत इति दिक् ॥ २२ ॥

पूर्वापरं चरतो माययैतौ शिशू क्रीळं-तौ परिपातो अध्वरम् ॥ विश्वान्यन्यो भुवनाभिचष्ठ ऋतूनन्यो विदधज्जाय-ते पुनः ॥ २३ ॥

ततो यज्ञरक्षार्थं प्रस्थितौ रामलक्ष्मणौ सूर्या-सावित्रीनामदेवता स्तौति—पूर्वापरमिति । शिशू

रामलक्ष्मणौ पूर्वापरमग्रे पश्चाच्च चरतो गच्छतः मायया शिशुत्वम् एतौ गतौ क्रीडंतौ अध्वरं परिपातः । तयोरन्य एको रामः सूर्यवद्विश्वानि भुवनानि क्षेत्राणि आचष्ट साकल्येन पश्यति, चैतन्यज्योतिःस्वरूपत्वात् । अन्यो लक्ष्मणः ऋतून् तिथ्यादिजननक्रमेण वसंतादीन् चंद्र इव ऋतुशब्दोदितं कालं काल्यमानं जगत् विदधद्र-चयन् पुनः पुनर्जायते । पक्षे श्रुतितो युक्तित-श्चाध्यारोपापवादाभ्यां प्रतिपन्नस्य वस्तुनः सम्पा-दनार्थं निदिध्यासमिच्छतः तदालंबनत्वेन सूत्रा-न्तर्यामिणावुपन्यस्तौ यद्यपि यज्ञं प्रतिगंतृत्वं रामकृष्णयोरपि शिश्वोर्द्दृष्टम् तथापीत आरभ्य यावदध्यायपरिसमाप्ति विवाहलिंगानि-"गृभ्-णामि ते सौभगत्वाय हस्तम्"इत्यादीनि-"उदी-र्षातः पतिवती ह्येषा संजायां पत्या सृज"इति भार्याहर्तुः प्रार्थनारूपेण लिंगेन लब्धायाः भार्या-

था: हरणम् 'पुनः पत्नीमग्निरदात्' इति पुन-
स्तल्लाभ इत्येतत्समुच्चितं सर्वं रामे एव संगतमि-
त अयं प्रघट्टको रामपर एव ॥ २३ ॥

परादेहिशामूल्यं ब्रह्मभ्यो विभजावसु
कृत्यैषा पद्वती भूत्वा जाया विशते
पतिम् ॥ २४॥

प्रस्थितयोस्तयोः पुरस्ताटक.मागतां वीक्ष्य
ऋषिराह—परादेहीति । विजयश्रियं गृहश्रियं वा
प्राप्तुं गच्छतः पूर्वं पराजयरूपा दारिद्र्यरूपा वा
अलक्ष्मीरायाति । तत्र पूर्वा शस्त्रेणैव हंतव्या,
परा दानादिना हंतव्येत्यत उक्तम् । शामूल्यममंग-
ल्यम् इदं ताटकारूपं परादेहि दूरतः खंडय,
इतरस्याः विनाशार्थं ब्रह्मभ्यो ब्राह्मणेभ्यो वसु
वित्तं विभज देहि । कुतः यत एषा कृत्या वधका-
मा राक्षसी पद्वती पादवती जायेव सहचारिणी

भूत्वा पतिं राजानं गृहपतिं वा विशते आयाति।
एवमुक्तमात्रेण रामेण ताटका निहता विवाहात्
प्राक् ब्राह्मणेभ्यो दानानि च दत्तानीत्युपरिष्टाद्द्र-
ष्टव्यम् । पक्षे शामूल्यमर्थतृष्णा सा हि कर्मोपा-
स्ति प्रतिबन्धहेतुर्वैराग्येण सर्वत्यागेन च हंत-
व्येति भावः । अयमपि पौर्वापर एव मंत्रः॥२४॥

उपप्रेत कुशिकाश्चेतयध्वमश्वं राये
प्रमुंचता सुदासः राजा वृत्रं जंघ-
नत्प्रागपागुदगथायजाते वर आपृ-
थिव्याः ॥ २५ ॥

एवं ताटकां हत्वा यज्ञवाटमागत्याहतुः—उपप्रेति ।
भो कुशिकाः विश्वामित्रीयाः उपप्रेत समीपे प्रकर्षे
णायात चेतयध्वं सावधाना भवत । राये कर्म-
समृद्धये सुदासः सुदासगोत्रोत्पन्नस्य रामस्याज्ञया
अश्वं यज्ञसाधनविशेषं प्रमुंचत प्रचारयत । राजा

रामो वृत्रं विघ्नकरम् असुरगणं जंघनत् निहन्ति प्रागपागुदक् सर्वदिक्षु स्थितम् । अथ अनंतरं पृथिव्याःवरे स्थाने यज्ञवाटे आयजाति—उपसंवादं करोति यजध्वमित्याज्ञापयतीत्यर्थः । अत्र त्रेशब्दितौ मारीचसुबाहू । पक्षे कर्तृत्वाभिमानः, फलाभिषंगश्च— तौ निहत्य ईश्वरो भक्तानां यज्ञं यातीति भावः अश्वादिकीर्तनं प्ररोचनार्थम् ॥ २५ ॥

विश्वामित्रा अरासत ब्रह्मेन्द्रायवज्रिणे
करदिन्नः सुराधसः ॥ २६ ॥

एवमुक्तिपूर्वकं यागे साधिते रामे विश्वामित्रानुग्रहमाह—विश्वामित्रा इति । विश्वामित्राःऋषयः ब्रह्म महतीं विद्यां बलातिबलाख्यां इन्द्राय रामाय अरासत दत्तवन्तः । वज्रिणे महामणिधारिणे । कीदृशं ब्रह्म नः अस्मान् सुराधसः शोभनसि-

द्वियुक्तानेव करन् कुर्वन् । पक्षे एवं तृष्णासंगं फलाशां च त्यक्त्वाऽनुष्ठिते यज्ञे, किंचिच्चित्तशुद्धौ जातायां विश्वामित्रोजीवःसर्वाणिकर्मांगावबद्धानि तत्तद्देवतोपासनानि प्रत्यगभिन्नरामाभिमुखान्येव करोति—"अहं क्रतुरहं यज्ञ" इत्युक्तप्रकारेणेति भावः ॥ २६ ॥

तनूपनो बलामन्द्रानतु स्तुनःबलन्तो काय तनयाय जीवसे त्वं हि बलदा असि ॥ २७ ॥

तत्रायं बलामंत्रः—बलं धेहीति बलं धेहि । अनलुतिस्वाति—जीविकामात्रस्योपलक्षणम् । तोकायेति—स्यादेरप्युपलक्षणम्, तोकाय स्त्रीपुं-साधारणायापत्याय । तनयाय—पुत्राय । जीवसे जीवितुम् शेषं स्पष्टम् सर्वेषां दार्थे सति स्वस्थ-चित्तो बाह्यानाभ्यन्तरांश्चारीन् जेतुं क्षमते इति भावः ॥ २७ ॥

इन्द्रोतिभिर्बहुलाभिर्नो अद्य याच्छे छ्राभिर्मघवञ्छूर जिन्व ॥ यो नो द्वेष्ट्यधरः सस्पदीष्ट यमु द्विष्मस्तमु प्राणो जहातु ॥ २८ ॥

अतिबलामन्त्रमाह–इन्द्रोतिभिरिति । हे इन्द्र ऊतिभिर्विभूतिभिर्बहुलाभिर्नोऽस्मान् अद्य जिन्व तर्पय, यातच्छ्रेष्ठाभिः यात्सु गच्छत्सु ब्रह्मादिषु मध्ये श्रेष्ठाभिः प्रशस्यतमाभिः । हे मघवन् हे शूर ता एवोतीराह–यो नोऽस्मान् (?) द्वेष्टि सः अधरो नीचो भूत्वा पदीष्ट पततु । यमु च द्विष्मो वयम् तमु तमपि प्राणो जहातु । अत्र बलायाः स्वरूपं शरीरसामर्थ्येनेष्टसिद्धिः, अति बलायास्तु मनसैवेष्टसिद्धिः । पक्षे असनादिदाढर्यहेतुरारोग्यादिकम्, ऐकाग्र्यदार्ढ्यहेतुश्चित्तस्य प्रत्यक्प्रावण्यं चेति

योग्यतया ग्राह्यम् । ऊतिभिर्योगैश्वर्यैः । यच्छ-
ब्दार्थः पाप्मा । उपप्रेतेत्यादयश्चत्वारो मंत्र
महाऋषिरित्यादिप्रपट्ठकस्थाः ॥ २८ ॥

अरं दासो न मीढुषे कराण्यहं ( ? )
देवाय भूर्णयेऽनागाः अचेतयदचिता
देवो अर्यो गृत्स राये कवितरो
जुनाति ॥ २९ ॥

एवं विद्यां प्राप्य गौतमाश्रमं गत्वाऽहल्योद्ध-
रणे कृते रामं गौतमः प्रस्तौति—अरं दास इति ।
अहं मीढुषे भार्याप्रदानेन मनोरथवर्षिणे देवाय
राज्ञे रामाय दासो न दास इव अरं कराणि
दिव्यगन्धपुष्पादिना अलंकरवाणि । भूर्णये
बहुप्रदात्रे । अनागाः निर्दोषः यतः अर्यः स्वामी
देवो द्योतमानः । अचितः—कर्मणिषष्ठी, चेतना-
रहितां पाषाणभूतां जायाम् अचेतयत् चेतनावतीं

कृतवान् । अतो मादृशस्तव दासो गृत्सम् "प्राणो वै गृत्स" इति श्रुतेः । प्राणवन्तं मेधाविनं जायादेहं राये कर्मसमृद्धये जुनाति अनुसरति । कवितरः क्रान्तदर्शिषु श्रेयान् । पक्षेऽहल्या सहधर्मचारिणी शुभवासना । गौतमो धर्मः । इन्द्रो धर्माभासःपाखण्डधर्मः, चेतनाभिभूतासती रामाश्रयात्पुनर्धर्मसाहचर्यं लेभे इति । अत्रापि पूर्वमन्त्रेण अस्ति ज्यायान्कनीयस उपराम् इति भ्रात्रोः साहचर्यम् । अर्योऽचितोऽचेतयदिति लिंगद्वयं राघवैकशरणम् ॥ २९ ॥

बलविज्ञायः स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रः ॥ अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथ मातिष्ठ गोवित् ॥ ३० ॥

अथ स्वयंवरं जिगमिषोः रामस्य दैवरथो दिव्यायुधानि चोपस्थितानीत्याह बलविज्ञाय इति। बलेविषये विज्ञायो विज्ञेयः परीक्षणीयोसि त्रैयंबकं धनुः सज्यं कृतवते कन्यां दास्यामीत्या- शयवता जनकेनेति शेषः। स्थविरो वृद्धः प्रवीरो ऽतिशूरः सहस्वान् मानसबलवान्। वाजी बाजो वेगः शारीरं बलं तद्वान्। सहमानः शत्रुचमूविम- र्दसोढा उग्रस्तासां मर्दिता। अभिवीरः सर्वतो वीरैः भ्रातृभिः परिवृतः। एतेनास्मिन्काले जन- कपुरे सर्वेषां भ्रातॄणां सन्निध्यमस्तीति सूचितम्। अभिसत्त्वा सर्वतो बलवान्। सहोजाः मनःसंक- ल्पमात्रात् जातः, न तु कर्मणा जातः। ईहक् सन् हे इन्द्र जैत्रं जयावहं रथम् आतिष्ठ। गोवित् गां भुवं विन्दति पालनीयत्वेनेति गोवित् राजा। पक्षे धर्मादिभिर्दृढमनाक्रान्तं मम चित्तरथम्

आक्रमस्व । ततश्च धर्मादयोपि तत्रास्पदं लप्स्यंते इति भावः । अक्षरयोजना स्पष्टा ॥ ३० ॥

**चमूषच्छ्येनः शकुनो बिभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत् ॥ अपामूर्मिं सचमानः समुद्रं तुरीयं धाम महिषो विवक्ति ॥ ३१ ॥**

चम्विति । चमूः शत्रुसेनाः सादयतीति चमूषत् । श्येनः शकुनः, जीवेशयोः पक्षिणोर्मध्ये बलवान् पक्षी ईश्वर इत्यर्थः । बिभृत्वा विश्वस्य धारकः, पोषकश्च । गोविन्दुः गां पृथ्वीं विन्दति वराहावतारे लभत इति गोविन्दुः उकारान्तत्वमार्षम् । द्रप्सः क्षीरादिमंडवत् ब्रह्मांडसारभूतः । आयुधानि धनुर्बाणादीनि बिभ्रत् धारयन्नस्तु । अपामूर्मिमन्तं समुद्रं सचमानो गच्छन् रावणवधार्थमिति शेषः । तुरीयं धाम विश्वतैजसप्राज्ञा-

पेक्षया चतुर्थं निरुपाधि चैतन्यज्योतिः । महिषो महान् । आराधितः सन् विवक्ति स्पष्टीकरोति । शुद्धं ब्रह्मैवास्मान्वीरवेषेणावत्विति भावः ॥ ३१ ॥

पिता यत्स्वां दुहितरमधिष्कन् क्ष्मया रेतः संजग्मानो निषिंचत् । स्वाध्योऽजनयन्ब्रह्म देवा वास्तोष्पतिं व्रतपां निरतक्षन् ॥ ३२ ॥

यदर्थं बलपरीक्षा जनकेन राज्ञा क्रियते तस्याः सीताया उत्पत्तिं भविष्यपुराणोपबृंहितामाह–पिता यदिति । पिता रावणो यत् यदा स्वां दुहितरं उत्पन्नमात्रां इयं कुलोच्छेदिका भविष्यतीति दैवज्ञवचनात् अधि अधिकं स्कन् स्कन्नवान् दूरे त्यक्तवान् । कुत्रेत्यत आह–क्ष्मया पृथिव्या संजग्मानः संगतः सन् । रेतो दुहि

रूपं निषिंचत् निषिक्तवान् भूम्युदरे तां निहितवानित्यर्थः।तत्रापि स्वाध्यः सपरीवारस्य रावणस्य वधेन सुष्ठु कल्याणं द्यावापृथिव्योर्ध्यायन्ति ते स्वाध्याः देवाः इन्द्रादयः तज्जीवनार्थं ब्रह्म चैतन्यम् । अजनयन् मातृगर्भ इव पृथिवीगर्भेपि तामरक्षन् । न त्वसौ श्वासनिरोधेन तत्र ममारेत्यर्थः । तत्रापि वास्तोष्पतिं स्थानाधिष्ठातारं गृहपतिं व्रतपां व्रतपतिं यजमानमुद्दिश्य निरतक्षन् यज्ञस्थानं कर्षितवन्तः ततश्चैनां स्थानपतिर्जनको लब्धवानिति भावः । पक्षे पिता कामः, दुहिता श्रद्धा, वास्तोष्पतिर्यज्ञाधिकारी धर्मादिकामो, ह्यदृष्टफले व्यर्थे श्रद्धां बध्नाति । अतः कामजा श्रद्धा चेत् बोधेन संयुज्येत, तर्हि सपरिवारं काममुन्मूलयेत् अतस्तां संतः (?) सात्त्विकीं राजसेन कामेन दूरे त्यक्तां यज्ञादिसत्कर्मकारी लभते इत्यर्थः ॥ ३२ ॥

अर्वाची सुभगे भव सीते वंदामहे त्वा यथा नः सुभगा ससि यथा नः सुफला ससि ॥ ३३ ॥

एवमाविर्भूतां सीतां देवाः शमादयो प्रार्थयन्ते–अर्वाचीति । हे सुभगे ! हे सीते ! स्यति सर्वेषां रक्षसामन्तं करोतीति सीता कर्तरि क्तः । लांगलपद्धतौ तु मुख्यस्यावयवार्थस्याभावात् सीतोत्पत्तिस्थानत्वेन सीतात्वं गौणं हे सीते त्वां वंदामहे यथा नोस्माकं सुभगा ऐश्वर्यदानेन सुफला प्रतिपक्षनाशनेन अससि दीप्यसे तथार्वाची अनुकूला भव ॥ ३३ ॥

इन्द्र सीतां निगृह्णातु तां पूषानुयच्छतु ॥ सा नः पयस्वती दुहा मुत्तरा मुत्तरां समाम् ॥ ३४ ॥

इन्द्र इति-इन्द्रो रामः सीतां निगृह्णातु वीर्यशुल्कां तां स्वायत्तां करोतु। पुष्णातीति पूषा, जनकश्च ताम् अनु पश्चात् रामाय यच्छतु ददातु सा सीता नोऽस्माकं दुहां दोग्ध्रीणां मध्ये उत्तरामुत्तरां समाम् उत्तरोत्तरवर्षेषु 'अत्यन्तसंयोगे' द्वितीया। पयस्वती बह्वन्नप्रदा भूयादिति शेषः। पक्षे इन्द्रः शास्त्रार्थावबोधः। सीतां सात्त्विकीं श्रद्धाम् पूषा धर्मः। पयो योगसिद्धिः॥ ३४॥

गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्मप्रमृणन्तमोजसा॥ इमं सजाता अनुवीरयध्वमिन्द्रं सखायो अनुसंरभध्वम्॥ ३५॥

ततः स्वयंवरशालां प्रविष्टेषु राजसु देववाक्यमिदम्—गोत्रभिदमिति॥ गोत्रः पर्वतेन्द्रः तेन तद्रूपं रुद्रधनुर्लक्ष्यते, त्रिपुरवधे—'रथः क्षोणी यंता शतधृतिरद्रीगेधनुः' इति तस्य तद्धनुष्य स्मरणात् तद्भि-

द रुद्रधनुर्भिदमित्यर्थः ॥ अत्र संहितायां प्रपूर्वमंत्रे रक्षोहा मित्रो अपबाधमा न इति पूर्वमंत्रे च, बलं विज्ञाय इति, गोत्रभिदिति (?) च लिंगात् अत्रापि गोत्रभित्पदस्य रुद्रधनुर्भित् राम एवार्थः, न तु पर्वतपक्षशातनः शक्रः । वज्रबाहुम् अज्मे पणनीयं गृहाभिधं स्वीयं द्रव्यं जयन्तम् ओजसा बलेन प्रमृणंतं मृन्द्गतम् अर्थाद्धनुरेव । ईदृशं रामं भोः सजाताः । समानाजाताः । भ्रातरः। इममनुलक्षीकृत्य वीरयध्वं विक्रमध्वम् ॥ अन्वेवसखायो भाविनो वानराः । अनुसंरभध्वम् आद्रियध्वम्, शत्रुप्रकोपे सतीतिशेषः । पक्षे गोत्रो मेरुः तेन तत्स्थः कामगणो लक्ष्यते, तमपि तुच्छीकृत्य स्थितं गोत्रभिदं तीव्रवैराग्यवन्तम् श्रद्धां चात्मसात्कृतवन्तः । सजाताः धर्मज्ञानवैराग्यैश्वर्यादयः सखायाः शमदमादयः । इममिन्द्रं भूमिमागत्य जीवभावंगतम् शेषं स्पष्टम्॥ ३५॥

सुमंगलीरियं वधूरिमां समेत पश्यत सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतन ॥ ३६ ॥

एवं धनुर्भंगे कृते जनकः सीतामानाय्याह सुमंगलीरिति। दत्वाय दत्त्वा। अस्तं स्वगृहं परेतन परावृत्य गच्छत। शेषं स्पष्टम्। पक्षे वधूः श्रद्धा, तस्याः सौभाग्यं यावद्विदेहकैवल्यं बोधेनावियोगः। अस्तं सर्वाधिष्ठानभूतं ब्रह्म ॥ ३६ ॥

गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः ॥ भगोऽर्यमा सविता पुरंधिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः ॥ ३७ ॥

ततो लब्धायाः सीतायाः पाणिग्रहणं रामः करोति गृभ्णामि इति ॥ सौभगत्वाय सौभाग्याय पत्या सह जरदष्टिर्जीर्यत्कुचग्रंथिःयथा–असः दीप्यसे तथा–ते हस्तं गृभ्णामि गृह्णामि भगादयो देवाः त्वा त्वां मह्यम् अदुर्दत्तवन्तः । गार्हपत्याय गार्हस्थ्याय । पक्षे यथा देवाः बोधस्य श्रद्धायोगं वांछन्ति, एवं बोधोपि कैवल्यं फलं प्राप्तुं श्रद्धायोगं वांछति । अक्षरयोजना सुखो ज्ञेया । एतौ द्वावपि मंत्रौ पूर्वापरौ ॥ ३७ ॥

अयं स्तुतो राजा वंदि वेधा अपश्च विप्रस्तरति स्वसेतुः ॥ सवदनावितं रेजयत्सो आग्नि नेमिन्नचक्रमर्वतो रघुद्रुः ॥ ३८ ॥

एवं सीतामादायायोध्यां प्रति प्रस्थितेन रामेण मध्ये मार्गे परशुरामे विजिते देवाः अस्तुवन्

(1) अयं स्तुत इति पंचभिः। अयं रामो राजा स्तुतो, वंदि अवंदि च देवैः अभिवादितः यतो वेधाः जगतः स्रष्टा अपः समुद्रं तरति तरिष्यति शीघ्रमेव तथा—विप्रः विप्रं च द्वितीयार्थे प्रथमा जामदग्न्यं च तरति। यतः स्वसेतुः स्वकृत-सेतुरवतरणसाधनं यस्यास्ति स तथा। अस्य शिलामयः सेतुः प्रसिद्धः विप्रेणानापदि शस्त्रं न धार्यमिति मर्यादापि स्वकृता सेतुरेव तदुल्लंघनकर्तृत्वाद्भार्गवोप्युल्लंघनीय एव। स राजा कक्षीवन्तं येन दशरथाय वरो दत्तः समुद्रजयिनस्तव पुत्राः भविष्यंतीति तम् अग्निं च चरुरूपेण गर्भीभवन्तं रेजयत् प्रेरितवान्। तत्र दृष्टान्तो नेमिं नेति नेमिमच्चक्रं यथाऽर्वतोऽश्वाननुरघुद्रुःशीघ्रगामी भवति, तद्वत्कक्षीवदाद-यस्त्वत्प्रेरिता इत्यर्थः। एतच्च प्रागेव दर्शितम्, अत्र जामदग्न्यो ब्राह्मणराजत्वात्सोमः। दाशरथिः

क्षत्रियराजत्वादादित्यः—"सोमोऽस्माकं ब्राह्मणानां राजा, आदित्यो वै दैवं क्षत्रम्" इति श्रुतिभ्यां तौ च पूर्वापरमंत्रोक्तरीत्या कार्यकारणरूपौ, अतः तस्य कारणानभिज्ञस्य कार्यस्य कारणेनाभिभवो युक्तः सूर्येण चन्द्रस्येव। अत्र दृप्तबालाकिरजातशत्रुश्च दृष्टांतत्वेन ज्ञेयौ, यत्तु रामबाणेन जामदग्न्यस्य लोका नाशिता इति तज्जगत्कारणबोधाद् ब्राह्मलौकिकमैश्वर्यं बाधितं भवतीत्येवपरम् इमे मंत्राः विप्रास्तरण लिंगात्, पूर्वोक्तकक्षीवदादिलिंगाद्वक्ष्यमाणलिंगेभ्यश्च रामपराः ॥ ३८ ॥

सद्रिबन्धुर्वैतरणो यष्टा सबर्धुंधेनुमस्वं दुहध्यै ॥ संयन्मित्रावरुणा वृंजउक्थैर्ज्येष्ठेभिरर्यमणं वरूथैः ॥ ३९ ॥

सद्रिबंधुरिति—सः राजा द्रिबंधुः द्वयोरन्योन्यविरोधिनोरपि वशिष्ठविश्वामित्रयोर्बन्धुः

।मन्त्रम्, सर्वात्मत्वात्सर्वसम इत्यर्थः ।
तावेव द्वावाह—एको वैतरणो दाता, परो यष्टा यागा-
दिकर्ता । तयोर्विरोधप्रयोजकमाह—सबर्धुं सगर्भ-
तादशायामपि दुग्धे इति, सबर्धुं धेनुं दोग्ध्रीम्
अस्वम् अप्रसूतां, यावत्प्रसूतिक्षीरदामित्यर्थः । प्रसू
त्युत्तरमेव दशाहं क्षीरं न दुग्धे "तस्माद्वत्सं जातं
दशरात्रीर्न दुहन्ति" इति श्रुतेः । दुहध्यै दोग्धुं
तादृशीं वशिष्ठधेनुं प्राप्तुं विश्वामित्रः कोटिशो
धेनूर्वितरन्नासीत् । यागानुरोधी वशिष्ठस्तु ताः
नांगीचकार, नापि स्वां धेनुं ददाविति पुराणप्र-
सिद्धम् । यथाक्रमं वैतरणः यत यदर्थं मित्रावरु-
णयोः पुत्रं वशिष्ठम्-'मित्रावरुणयोर्दीक्षितयोरुर्व-
शीमप्सरसं दृष्ट्वा वासतो वरे कुंभे रेतोऽपतत्ततोऽग-
स्त्यवशिष्ठावजायेताम्" इति वैदिकप्रसिद्धेः ।
उक्थैर्नानाविधैः कर्मभिः संवृंजे हिंसितवान्, तथा
यष्टापि ज्येष्ठेभिः योगप्रभावसृष्टैः वरूथैः सैन्यैः

अर्यमणम् अर्यं स्वामिनमात्मानं मन्यत इत्यर्यं-
मतं संवृजे इत्यनुषज्यते ॥ ३९ ॥

तद्बन्धुः सूरिर्दिवि ते धियं धा नाभा-
नेदिष्ठो रपति प्रवेनन् ॥ सा नो नाभिः
परमास्य वा घाहं तत्पश्चा कतिथश्चि
दास ॥ ४० ॥

सः पूर्वमन्त्रोक्तो राजा बंधुर्वश्यो यस्य स तद्ब-
न्धुः । नाभानेदिष्ठो नाम ऋषिः रपति स्पष्टं
वक्ति । कीदृशः सूरिः विद्वान्, तथा–हे शिष्य ते
तव दिवि हार्दाकाशे धियं धाः बुद्धेर्धारकःतव
परविद्योपदेशकः । प्रवेनन् ब्रह्मवित्त्वादेव अत्यन्तं
कान्तिमान् । किं रपति तदाह–सा विधेयापेक्षं
स्त्रीत्वं स राजा नोस्माकं जीवानां सोपाधीनां
नाभिरिव नाभिः मध्यं अन्तरम् उपाध्यपगमा-
वशिष्टं रूपम् । परमा महती त्रिविधपरिच्छेदशू-

न्येत्यर्थः । वाघेत्यथर्कौ । अस्य राज्ञः पश्चात् अनंतरम् अहं नाभानेदिष्ठः कतिथः कतितमश्चि-द्वितर्कें आस अभूवम्, आसेति-लिटा स्व-स्याप्येतत्परोक्षमित्युक्तम् ॥ तथा हि-विष्णो-र्ब्रह्मा, ततो मरीचिसुतः कश्यपः, इति ततो-विवस्वान्, ततो मनुः, मनोर्नाभानेदिष्ठ इति वंशो गम्यते ॥ ४० ॥

इयं मे नाभिरिह मे सधस्थमिमे मे देवा अयमस्मि सर्वः ॥ द्विजा अह प्रथमजा ऋतस्येदं धेनुरदुहज्जाय माना ॥ ४१ ॥

इयम् अयं राजा मे मम नाभिः कोशपंचका-न्तर्गत शुद्धरूपम् इह अस्मिन्नेव मे मम सधस्थं गृहं लयस्थानमव्याकृतमित्यर्थः ॥ कारणस्या-प्ययमेवाधिष्ठानम् इमे देवीः इन्द्रियाणि च । मे

अयंमण न अदमेव विधेयापेक्षं बहुत्वम् । अयमहमे-
मतं गं ास्मि । सर्वः सर्वात्मा । किं च ऋतस्य सत्यस्य
वस्तुनः प्रथमजाः प्रथमं जातोऽअव्यक्तरूपी ।
तथा द्विजाः द्वितीयं जातो व्यक्तरूपी च अह
निश्चितम् इदं यमेव इदमित्थं शाश्वतत्वं जायमा-
नाऽस्यनिःश्वसितवदाविर्भवन्ती धेनुर्वाक् अदुहत
प्रकाशितवती ॥ ४१ ॥

अथासु मन्द्रो अरतिर्विभावाऽवस्यति
द्विवर्तनिर्वनेषाट् ॥ ऊर्ध्वा यच्छ्रेणिर्न
शिशुर्दन्मक्षु स्थिरं शेवृधं सूत
माता ॥ ४२ ॥

अथ अनन्तरम् अयं राजा आसु भूवसतिषु
मन्द्रो मध्यगतिः । विभावा विशेषेण तेजस्वी ।
अरतिर्ब्रह्मचर्यव्रतनिष्ठः । अवस्यति अवस्थिति
प्राप्नोति देशान्तरं गच्छन् स्थाने स्थाने वासं

करोतीत्यर्थः । अत्रस्यति रक्षसामन्तं करोति वाऽर्थः । कीदृशः द्विवर्तनिः द्वे वर्तन्यौ मार्गौ यस्य सः तपस्विमार्गम्, शूरमार्गं वानुसरतीत्यर्थः। अत एव वनेषाट् वने सहते शीतवातादिकं वा रक्षसां वधं कर्तुमुत्सहते वा वनेषाट् । यत् यो राजा ऊर्ध्वा ऊर्ध्वीकृता श्रेणिः सोपानपद्धतिः । नइवार्थे । ऊर्ध्वं स्थानं जिगमिषूणामयं श्रेणिवदालंबनीभूत इत्यर्थः । कीदृशः शिशुः अल्पवया अपि दन् दमयन् अर्थात् शत्रूनिति लभ्यते । मक्षु सम्यक् यस्तं शेवृधं सुखे वर्धयितारम्स्थिरम् अचलस्वभावम् माता कौशल्या सूत असूत अडभावश्छांदसः॥ ४२ ॥

सध्या यत्कर्त्वमभवदभीके कामं कृण्वाने पितरि युवत्याम् । मनानग्रे तोजहतुर्वियन्ता सानौ निषिक्तं सुकृतस्य योनौ ॥ ४३ ॥

वनेषाडित्युक्तं तत्र अयोध्यायां रामाय दीयमानं राज्यं भरताय देयं रामश्च वनं प्रति प्रस्थापनीय इति कैकेयीचारित्रं निमिषं तदाह-मध्येति। अभीके संग्रामनिमित्तं मध्यामध्यस्थाभ्यां मंथराकैकेयीभ्यां यत्कर्त्वं कर्तव्यम् अभवत्तदपि त्वत्त एवजातमिति पूर्वोदाहृतादयं स्तुत इत्येतस्मादपकृष्यते। कस्मिन्सति पितरि दशरथे युवत्यां कैकेय्यां निमित्तभूतायां कामं तस्यै वरप्रदानं कृण्वाने संपादयति। वियन्ता विदेशं गच्छन्तौ रामलक्ष्मणौ रेतस्तत्प्रदातारं पितरं जहतुः त्यक्तवन्तौ। कीदृशं रेतः मनानक् मनसा न अंचति इति मनानक् रामगमनम् अनिच्छत् निर्मनस्कं मृतमिति वा। अत एव सुकृतस्य योनौ सत्ये निषिक्तं सानौ महत्युच्चस्थाने स्वर्गे वा। पक्षे निहततृष्णाताटकस्य, निरस्त कर्तृत्वाभिमानमारीचस्य, हतफलासंगसुबाहोः, विदिताध्या-

त्मविद्याबलातिबलस्य, बोधि शुभतनवासना-
इत्यस्यतोषितधर्मगौतमस्य, तृणीकृतब्रह्मलोक
धनुषः, लब्धसीताश्रद्धस्य, बाधितब्राह्मलौकैश्व-
र्यजामदग्न्यतपसपरोक्षबोधलक्ष्मणज्येष्ठस्य अ-
परोक्षबोधरामस्य, देहायोध्यायां वस्तुमिच्छतः,
सानुजश्रद्धस्य, प्रवासं भरतंजीवस्य च तत्र
राज्यमिच्छंतीभ्यां भोगदेहवासनाभ्यां मंथरा
कैकयीभ्यां मध्यस्थाभ्यां यत्कर्तव्यं मनोदशरथ-
स्य वचनं कामरावणवधनिमित्तं तत्राप्यन्तर्या-
म्यनुग्रह एव हेतुः । ततः सश्रद्धे द्विविधेपि बोधे
मनस्तोऽपगते मनः स्वर्गपरमभूदिति । अयं मंत्रो
योग्यत्वादुपन्यस्तः ॥ ४३ ॥

दंडा इवेद्गोअजनास आसन्परिच्छि-
न्नाभरताअर्भकासः ॥ अभवंच पुर

एतावशिष्ट आदित्तृत्सूनां विशो अप्रथंत॥ ४४ ॥

रामे वनगते यद्वृत्तं तदाह-दंडा इवेति। भरताः भरतशत्रुघ्नादयः गोअजनासः गवांचालकाः दंडाः यष्टय इव अकिंचित्कराः आसन्। परिछिन्नाः अल्पाः यतोऽर्भकासः कनिष्ठाः, तेषां च पुर एता पुरोहितो वशिष्ठोऽभवत् आदित् अस्माद्वशिष्ठादेव। तृत्सूनामिति तृप्सूनां वर्णलोपविकारावाप्तौ रामदर्शनेनैव तृप्तिमिच्छतां विशः प्रजा अप्रथन्त प्रथां गताभरतादिषु राज्यमनिच्छत्सु वशिष्ठ एव राज्यं चकारेत्यर्थः। बोधार्थी जीवः शास्त्रगुर्वधीनोऽसंगः सन् दैहिकं कर्माकरोत्यर्थः ॥ मंत्रोयं स्पष्टलिंगः ॥ ४४ ॥

ओषु स्वसारः कारवे शृणोत ययौ वो दूरादनसा रथेन ॥ निषूनमध्वं

भवतासुपारा अधो अक्षाः सिन्धवः स्रोत्याभिः ॥ ४५ ॥

वनं प्रति प्रस्थितं राममनुगच्छन्विश्वामित्रो मध्ये मार्गमागतः नदीः प्रार्थयते--ओष्विति। भोः स्वसारो भगिनीतुल्याः सिन्धवो नद्यः ओषु अत्यन्तं सुष्ठु शृणोत मदीयं वचनं शृणुध्वम्। कारवे करोतीति कारुः महतः कार्यस्य रक्षोवधादेः कर्ता तस्य प्रीत्यर्थमित्यर्थः।स हि दूरात् अनसा चेष्टावता रथेन वःयुष्मान् प्रति ययौ आगतवान् ॥ अत एव निषू नितरां सुष्ठु नमध्वम् नतिं भजध्वम् स्रोत्याभिः क्षुद्रनदीभिः सह सुपाराः सुगमपाराः।अधोअक्षः रथाक्षादधोवाहिन्यश्च भवत। रामायणे तु नौकया नदीतरणमुक्तं तदपि श्रुत्यन्तरमूलकं कल्पांतरविषयमिति ज्ञेयम् ॥ ४५ ॥

अतारिषुर्भरता गव्यवःसमभक्त विप्रः सुमतिं नदीनाम्॥ प्रपिन्वध्वमिषयन्तीः सुराधा आ वक्षणाः पृणध्वं यात शीभम् ॥ ४६ ॥

एवं नदीः समुत्तीर्य चित्रकूटं प्रतिगते रामे भरतः किमकरोदित्यत आह--अतारिषु इति। गव्यवः गवा पृथिव्या युवन्ति वियुज्यंत इति गव्यवः यौतिरत्रामिश्रणार्थः, राज्यं त्यक्तवन्त इत्यर्थः। ईदृशाः भरताः नदीनां नदीः अतारिषुस्तीर्णवन्तः तत्रापि विप्रो भरद्वाज इति पुराणात् सुमतिं शोभनमतिं भरतं समभक्त सम्यक् सेवितवान्, तस्यातिथ्यं कृतवानित्यर्थः। तदेवाभिनयति-प्रेति। भो शिष्या इषयन्तीः इच्छन्त्यः प्रीतिमत्यः सुराधा बहुसंपदः शोभनाः सिद्धयः प्राप्तिप्राकाम्यादयः ताः प्रपिन्वध्वं प्रकर्षेण पुष्टाः

कुरुत । वक्षणाः घृतकुल्याः मधुकुल्याश्च आपृण ध्वं पूरयत । ततश्च शीभम् ईश्वरत्वाभिमानिनं भरतं यात आतिथ्येन गच्छतेत्यर्थः ॥ ४६ ॥

यदंग त्वा भरताःसंतरेयुर्गव्यन् ग्राम इषित इन्द्रजूतः ॥ अर्षादह प्रसवः सर्गतक्त आ वो वृणे सुमतिं यज्ञि यानाम् ॥ ४७॥

ततो रामं प्रति गत्वा भरतः किं चकारेत्यपि विश्वामित्रवाक्यादेवावगतं तदाह—यदंगेति । हे अंग महानदि यत् यतः त्वा त्वां भरताः संत-रेयुस्तीर्णाः तत्तां वः । वत्वं पूजायाम् । यज्ञियानां तव यज्ञार्हायाः सुमतिं शोभनां मतिं नतिक-रीम् आवृणे प्रार्थये । यैः भरतैः गव्यन् गां नंदि-नम् आत्मन इच्छतीति गव्यन् नन्दिस्वामिको ग्रामः नन्दिग्रामःइषितःअभीप्सितो वासार्थं नत्व

योऽध्येत्यर्थात् सोपि ग्रामः इन्द्रजूतः इन्द्रेण रामेण प्रेरितः तत एव प्रसवः रामस्याज्ञा अह प्रसिद्धम् अर्षात् गतवती सर्वत्राप्रतिहताभूदित्यर्थः । कीदृशो ग्रामः सर्गतक्तः सृज्यत इति सर्ग आज्ञप्तो भरतः तक्तः कृच्छ्रेण जीवितो यस्मिन् स सर्ग तक्तः, नंदिग्रामे व्रतकृशो भरतो रामाज्ञया राज्यं चकारेत्यर्थः ॥ ४७ ॥

न हिषस्तव नो मम शास्त्रे अन्यस्य
रण्यति॥यो अस्मान्वीर आनयत्॥४८॥

ततो लक्ष्मणार्थं प्रार्थयन्तीं शूर्पणखां रामो वचोभंगयन्तरेण निरस्यति—नहीति। स लक्ष्मणः हि निश्चितं तव शास्त्रे आज्ञायां न रण्यति न चलति मम अन्यस्य वा शास्त्रे नो नैव रण्यति । कुतः यो वीरोऽस्मान् आनयत् एतदधीना वयं त्वयमस्मदधीन इत्यर्थः ॥ ४८ ॥

इन्द्राश्चिद्घातदब्रवीत्स्त्रिया अशास्यं मनः ॥ उतो अह क्रतुं रघुम् ॥ ४९ ॥

एव मुक्तापि सा यदाऽतिनिर्बन्धान्न निवर्तते तदा राम आह--इन्द्र इति । चिद्घेत्यनर्थकौ निपातौ, एवं उतो अहेत्येतावपि । इन्द्रो रामः ततं वक्ष्यमाणं वचः रघुं लक्ष्मणम् अब्रवीत् । किमब्रवीत् स्त्रिया मनो अशास्यमिति । कीदृशं रघुम् क्रतुम्--कृणोति हिनस्तीति क्रतुस्तम् । शूर्पणखामेव तां हन्तुमिच्छंतम् ॥ ४९ ॥

सप्तीचिद्घा मदच्युता मिथुनावहतो रथम् ॥ एवेद्धूर्वृष्णउत्तरा ॥ ५० ॥

पुनःकिमब्रवीत्तदाह--सप्ती इति । सप्ती अश्वौ॥ तेन तयोरुच्चैःश्रवस्त्वेनाख्या उच्चौ कर्णौ लक्ष्येते मदच्युता मदस्राविणौ मिथुनौ रथं शरीरं वहतः । गाढांधकारे हि श्रोत्रबलेनैव दूरस्थमाह्वयितारं

गच्छन्ति शब्दवेधिनश्च शत्रून्विध्यन्ति । बिद्ध्यनर्थकौ तथा वृष्णोवर्षुकस्य मदलाविणः धूरिव धूर्नासावंशः उत्तरा श्रेष्ठतरा । एवेदिति एवमेवेति छेदनाभिनयः प्रदर्श्यते । अस्याः कर्णनासमेव छेत्तव्यं न त्वियं हंतव्येति सुचितमात्रे लक्ष्मणस्तत्कृतवानित्यर्थः ॥ ५० ॥

अधः पश्यस्व मोपरि संतरां पादकौ हर ॥ मा ते कशप्लकौ दृशन्स्त्री हि ब्रह्मा बभूविथ ॥ ५१ ॥

ततस्तन्निमित्तविघ्नसंभावनया रामः सीतामनुशास्ति—अध इति । हे सीते त्वम् अधः पश्यस्व, न तु तिर्यक् संमुखं वा पुरुषान्तरदर्शनं परिहरस्वेति भावः ॥ मोपरि उपर्यपि मा पश्यस्व, तत्रापि खेचराणां दर्शनस्य संभाव्यमानत्वात् । पादकौ पादौ संतराम् अतिसम्यक्तया विनयेन हर

चालय । ते तव कशप्लुकौ गुल्फौ मा हृशन् मा हृश्यौ भूतम् ॥ हि यस्मात्त्वी स्वावयवद्वारेण ब्रह्मवित् बभूविथ पूर्वं जाता संयमवत्यां ब्रह्मविदु-र्पद्यते,व्यभिचारिण्यां तु दुरात्मातोवंचकेभ्यो राक्षसेभ्यः आत्मानं पाहीति भावः । पक्षे विषय स्पृहया बाध्यमाने परोक्षबोधेऽन्तर्यामिप्रेरितः तद्धेतुविषयघ्राणश्रवणे छिन्नवान् ॥ ५१ ॥

स इद्दासन्तु वीरवं पतिर्दन् षळक्ष त्रिशीर्षाणं दमन्यत् ॥ अस्य त्रितो न्वोजसा वृधानो विपा वराहमयो अग्रया हन् ॥ ५२ ॥

ततः शूर्पणखां विरूपितां दृष्ट्वा तद्धयरामलक्ष्म-णवधार्थमागतान् खरदूषणात्रिशिरस्संज्ञान् रामो जघानेत्युच्यते—कं नश्चित्रीयेण मंत्रेण स एव रामः दासं लोकान् उपक्षिण्वन्तं दूषणं तु वीरवं

महास्वनं खरं पडक्षं त्रिशीर्षाणं नेत्रपङ्क्वन्तं त्रिशिरसं च पतिः पाता दन् दुष्टानां दमकः दमन्यत् दमितवान् हतवान् । अस्यैव दूषणादिहन्तुः विशिष्टेन ओजसा बलेन वृधानो वर्धमानः त्रितोनाम अंगुल्या अयोअग्रया अयोवत्तीक्ष्णनखया वराहं महान्तं वराहाकारं दानवं हन् हतवान् । अयं खलान् हंतीति किं चित्रम् अनेनानुगृहीता अपि तान् घ्नंतीत्ययमेवाभयकामैराराधनीय इति भावः ॥ ५२ ॥

यदचरस्तन्वा वावृधानो बलानीन्द्र प्रब्रुवाणो जनेषु ॥ मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं ननु पुरा विवित्से ॥ ५३ ॥

एवं खरादीन्हत्वा स्थितं रामं देवाः स्तुवन्ति तां तृतीयेन मंत्रेण—यदचर इति । हे इन्द्र

जनेषु जनस्थानेषु तन्वा शरीरेण वावृधानो महीयमानः बलानि सामर्थ्यानि प्रब्रुवाणःकथयन् रक्षांसि निघ्नन् यदचरः संचारं कृतवानसि, यानि च युद्धान्याहुः पौराणिकाः,सा ते तव मायेत् मायैव। यतस्त्वम् अद्य पुरा वा शत्रुं शातनीयं ननु निश्चितं न विवित्सेन जानासि सर्वेषामंतरात्मत्वादिति भावः। अत्र खरो मानः, दूषणो मत्सरः, त्रिशिराः धनविद्याभिजनजस्त्रिविधो मदः तान् स्पृहासहितान्निघ्नन्योगी मायामात्रं जगदिति पश्यतीत्यर्थः ॥ ५३ ॥

स्त्रियं दृष्ट्वाय कितवं ततापान्येषां जायां सुकृतं च योनिम् ॥ पूर्वाह्णे अश्वान्युयुजे हि बभ्रून्सो अग्नेरन्ते वृषलः पपाद ॥ ५४ ॥

इमं वृत्तांतं शूर्पणखामुखादाकर्ण्य रावणः किं चकारेत्यत आह-स्त्रियमिति। स्त्रियं निकृताक-

महास्त्र॰। शूर्पणखां दृष्ट्वाय दृष्ट्वा कितवं कपटमृगस त्रि॰। सिवेषधारिराक्षसद्वयं कर्तृ स्त्रीदर्शनेन क्षुब्धं सत् अन्येषाम् अन्यस्य रामस्य जायां सीतां सुकृतम्, अग्निहोत्रादिकं योनिं वंशं च तताप तापितवत् । जायाहरणेनैव त्रयमपि तप्तमभूदित्यर्थः। हि यतः बभ्रून् अश्वान् पूर्वाह्णे एव युयुजे रथे, तेन च रथेन वृषलो धर्मद्रोही रावणःअग्नेरन्ते रामाग्निशालासमीपे पपाद जगाम मारीचेन सहेति शेषः ॥ ५४ ॥

इन्द्रतुभ्यमिदद्रिवोनुत्तं वज्रिन्वीर्यम् ॥
यद्ध त्यं मायिनं मृगं तमु त्वं माय-
याावधीरर्चन्ननु स्वराज्यम् ॥ ५५ ॥

ततोहतमारीचं रामंमृषिःस्तौति-इन्द्रमिति । हे इन्द्र तुभ्यमित तवैव वीर्यं सामर्थ्यम् अनुत्तं कचिदप्यपराभूतम् ।हे अद्रिवः आद्रिं रुद्रचापरूपं

मेरुं वाति हिनस्तीत्यद्रिवः । हे वज्रिन् अत्याद रेण बहुकृत्वःसंबोधयति । यत्र यतः ह प्रसिद्धं त्यं परोक्षं मायिनं मृगं मारीचं त्वं मायया मानुष देहरूपयाऽवधीर्हतवानसि । यतः स्वस्य राजोचितं कर्म अन्वर्चन् स्ववंशपरंपरागतमनुपूजयन् राज्ञां मृगया उचितेत्येव हतवानासि, न तु द्वेषबुद्ध्या सर्वान्तरत्वात्तवेति भावः ॥ ५५ ॥

**यो वः सेनानीर्महतो गणस्य राजा व्रातस्य प्रथमो बभूव ॥ तस्मै कृणोमि न धना रुणध्मि दशाहं प्राचीस्तदृतं वदामि ॥ ५६ ॥**

ततो दूरस्थे रामे लक्ष्मणे च तदनुयायिनि शून्ये सीतां प्रार्थयमानं रावणं प्रति सीता प्राह–यो व इति ॥ यो वो रक्षसां महतो गणस्य सेनानीः । यो वा वो महतो व्रातस्य

प्रथमो मुख्यो राजा बभूव। तस्मै ते कृणोमि निर्हन्मि शीघ्रमेव नाशयिष्यामि। धना भवदीयानि धनानि न रुणध्मि न कांक्षे। तदिदम् ऋतं वाक्यं दश प्राचीः प्रागादिदिशः प्रति वदामि ॥ ५६ ॥

इनो राजन्नरतिः समिद्धो रौद्रो दक्षाय सुषुमान्दर्शि ॥ चिकिद्विभाति भासा बृहता सिक्नीमेति रुशतीमपाजन् ॥ ५७ ॥

एवं निरस्तं रावणं सीताहरणोद्यतमालक्ष्याग्निरचिंतयत्-इनोराजन्निति। मनसैव रामं संबोधयति। हे राजन् इनः बलीयान् अरतिः अलब्धकामसुखः समिद्धः कामाग्निना प्रदीप्तः रौद्रो भयंकरः दक्षाय साहसाय सुषुमान् समर्थः अदर्शि दृष्टः। चिकित्त्वत्सामर्थ्यं जानन्नपि विभाति

वैपरीत्येन दीप्यते, भासा दीप्त्या बृहता बृहत्या असिक्नीं कालरात्रिमिव कृष्णां रुशतीं दह्यमानाम् एति आयाति । अपाजन् अपसरिष्यन्नेनां चोरयित्वेति शेषः ॥ ५७ ॥

कृष्णां यदेनीमभि वर्पसाभूज्जनयन्योषां बृहतः पितुर्जाम् ॥ ऊर्ध्वं भानुं सूर्यस्य स्तभायन्दिवो वसुभिररतिर्विभाति ॥ ५८ ॥

कृष्णामिति—स एवं चिन्तयन्नग्निर्यत् यदा कृष्णां कालरात्रितुल्याम् एनीं विवर्णां सीतां वर्पसा वारयन् यातीति, वर्पः स्वं रूपम् तेन कवचेनैतदाच्छादकेन योगबलेन अभ्यभूत् तिरोहितां कृतवान् । किंभूतः—बृहतः ब्रह्मणः संकल्पादेवेत्यर्थः । योषामन्यां स्त्रियं छायासीतां जनयन् । पितुः रामस्य जां जायामिव जायां

तदा तां गृहीत्वा अरतिः रावणः ऊर्ध्वम् आकाश मार्गे सूर्यस्य दिवः द्युसंबंधिनो देवतागणस्य च वसुभिर्देवताविशेषैः सह तेषां सर्वेषां भानुं करं हस्तमिति यावत् स्तभायन् स्तंभयन् विभाति। रावणेन आकाशमार्गेण नीयमानां सीतां राव णाद्दाच्छेत्तुं कोपि प्रभुर्नाभवदित्यर्थः। पक्षे स्पृ- हया प्रेरितो मारीचो दंभः, रावणः कामः तां सीतां श्रद्धां दंभोन्मुखतया परोक्षमपरोक्षं च बोधं रामलक्ष्मणाख्यं दूरे कुर्वन्तीं कामो जहार। अग्निः यज्ञः स तु तस्याः सात्त्विकं रूपं गोपित- वानित्यर्थः ॥ भद्रो भद्रयेत्यग्निमंत्रेऽग्निः सीतां रामाय समर्पितवानिति दर्शनादेतावपि रामपरौ ॥ ५८ ॥

स ईं वृषा न फेनमस्यदाजौ स्मदाप-
रैदपदभ्रचेताः ॥ सरत्पदा न दक्षिणा
परावृङ्न तानु मे पृशान्यो जगृभ्रे ॥ ५९ ॥

स इति । स हृतदारो रामभद्रः ईम् एनां सीतां निमित्तीकृत्य आजौ राक्षसैः सह संग्रामे अस्यत् आस्यत् बाणान्प्राक्षिपत् । तत्र दृष्टांतः वृषा न-फेनमिति । यथा महोक्षः क्रोधाविष्टः फेनविप्रुषो मुखनासिकेन फूत्कारं कुर्वन्नस्यति तद्वत् । तत्र हेतुः-दभ्रचेताः स्थूलबुद्धिः आ इति स्मृत्यर्थो निपातः स्मत् अस्मत् परा परोक्षम् अपैत् अपगतोदारहर्तेति प्रत्यक्षश्चेत्स्यात्तर्हि सद्य एव निहतः स्यादिति भावः । ततः किं चकारेत्याह-सरदिति । दक्षिणा दक्षिणप्रदेशं पदान यथाऽश्वादीनां पदमन्विष्यते भूमौ तथा पदेनैव सरत् सीतार्थम इतस्ततो गच्छन् परावृक् पराभिभूतः शोकेनेत्यर्थः । ताः प्रसिद्धाः पृशन्यः पृच्छन्तं नयन्ति इष्टं देशं प्रापयन्ति ते पृशन्यः शुभाशुभफलसूचकाः पशुपक्षिणः मे मां न अनुजगृभ्रे अनुगृहीतवन्तः । सीताप्राप्तिसूचकं शकुनमपि न

जायत इत्यत्यन्तं शोकं कृतवानित्यर्थः ॥ पक्षे श्रद्धां विना विकलो बोधः दक्षिणेन ऋजुना धर्ममार्गेण श्रद्धाप्राप्तिं स्वाभ्युदयाय कामयत इति छायार्थः ॥ अयं मंत्रो मध्याय-स्कर्त्तीयः ॥ ५९ ॥

विधुं दद्राणं समने बहूनां युवानं संतं पलितो जगार ॥ देवस्य पश्य काव्यं महित्वा द्या ममार स ह्यः समान ॥६०॥

विधुमिति--समने संग्रामे विधुं बहूनां शूरा-णां विधूननकरं दद्राणं द्रावणकरं युवानमपि संतं रावणं सीताहर्तारं पलितो वृद्धोपि अग्रिमसंत्रा दरुणपुत्रः सुपर्ण इति गम्यते ॥ तेन जटायुनामा पक्षी जगार निगीर्णवान् ॥ तर्हि सिद्धं न समी हितं नेत्याह--देवस्येति । देवस्य सर्वान्राक्षसान् मिच्छतः इन्द्रस्य काव्यं क्रान्तदर्शित्वं

पश्य । यद्यद्यैव रावणो वध्यते तर्हीतरेषां रक्षसां क्षयो न भविता, इत एव रामो निवृत्तो भवेत्, तदर्थं यो ह्यः पूर्वेद्युः समान सम्यगचेष्टत रावणाभिभवं कृतवान्, सः अद्य परेद्युर्ममार ॥ सर्वराक्षसक्षयार्थं जटायोरपि मरणं देवेन्द्रेणैव संपादितमित्यर्थः ॥ पक्षेमनोदशरथस्य तापशामकत्वात् विवेकजटायुस्तत्सखा, सोपि श्रद्धां हरन्तं कामं निरोद्धुं न शशाक प्रत्युत स्वयमेव नष्ट इत्यर्थः ॥ ६० ॥

शाक्मना शाको अरुणः सुपर्ण आयो महः शूरः सनादनीळः ॥यच्चिकेत सत्यमित्तन्न मोघं वसु स्पार्हमुत जेतोत दाता ॥ ६१ ॥

शाक्मनेति—सुपर्णो जटायुर्यच्चिकेत यत् ज्ञातवान्, अहं रावणं हत्वा रामाय सीतां दास्या-

मीति, तत् सत्यमित् सत्यमेव, न तु मोघं न निष्फलम्, मृतस्यापि साधोः संकल्पोन्यथा न भवतीत्यर्थः । अतः स्पार्हं स्पृहणीयं वसु सीताख्यं धनं रामो रावणं हत्वा जेता जेष्यति उत दाता अपि च रक्षोवनस्य । कीदृशः सुपर्णः शाकमना शाकः शक्नोत्यनेनेत्युत्साहेन शक्तिमान् । अरुणो रामे रागवान् अरुणपुत्रत्वा-द्वाऽरुणः । महो महान् शूरः । सनात् सर्वदा अनीडः अनिकेतः महायोगीत्यर्थः । पक्षे यद्वि-वेकेन दृष्टं तत्तथैवावसरे प्राप्ते बोधः समर्थयत इति भावः । सुपर्णो दूरगामी ॥ ६१ ॥

ऐभिर्ददे वृष्ण्या पौंस्यानि येभिरौ-क्षद्वृत्रहत्याय वज्री ॥ ये कर्मणः क्रि-यमाणस्य मह्न ऋते कर्ममुदजायन्त देवाः ॥ ६२ ॥

कथं तत्संकल्पः सत्योऽभूदत आह—ऐभिरिति। एभिः देवैः वृष्ण्या वृष्णां वर्षणशीलानां पशूनां चिह्नानि लांगूलवत्त्वचतुष्पादचारित्वादीनि पौंस्यानि पुंसां मानुषाणामिमानि चिह्नानि हस्तादायित्वात्रेकोपवेशित्वादीनि वानरेषु दृष्टानि आददे आददिरे आत्तानि । एकत्वमार्षम् येभिः यैरुपात्तैश्चिह्नैर्युतो वज्री इन्द्रः वालिरूपी वृत्रहत्याय दंडरूपाय मरणाय औक्षत् रेतःसेकं कृतवान् कापेयीं चलचित्ततां प्राप्य कनिष्ठभ्रातुर्भार्यां दुहितृकल्पां गत्वा वाली वध्यत्वं प्रापेत्यर्थः । ये देवाः ऋते कर्मम् वानरयोनिप्रापकं दुरितं विनापि क्रियमाणस्य करिष्यमाणस्य सेतुबंधनराक्षसवधादेः कर्मणः महा माहात्म्येन उदजायंत वानररूपेण महत्कर्म कर्तुमाविर्भूता इत्यर्थः ॥ तैरेव सहायैर्जटायुसंकल्पं रामः साधितवानिति भावः ॥ पक्षे बोध-

सहायाः श्रोत्रेन्द्रियादयः ध्यानार्थमन्तर्मुखाः वेदान्तश्रवणार्थं बहिर्मुखाश्चेति ज्ञाऽज्ञचिह्नानि धारयन्ति, तत्रापि महानपि बहिर्मुखत्वेन प्रमाद्यति, अतोन्तर्मुखतयैव सर्वदा स्थेयमित्यर्थः ॥ अस्मिन् पक्षे ऋते कर्म ब्रह्म क्रियमाणस्य कर्मणो योगधर्मस्य माहात्म्येन देवाःसाधकाः ह्वदजायन्त ब्रह्मभावं गता इति योज्यम् ॥६२॥

नीचीनबारं वरुणः कबंधं प्रससर्ज रोदसी अंतरिक्षम् ॥ तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम ॥ ६३ ॥

सुग्रीवसख्यात्प्राक् कबंधवधमाह—नीचीनेति। ये विश्वस्य भुवनस्य राजा रोदसी अंतरिक्षं च प्रससर्ज, सः नीचीनबारम् अधोद्वारं वक्षोमुखं कबंधं नाम राक्षसं वरुणो वृण्वानो भूत्वा तेन

कबंधेन भूम भूमिं व्युनत्ति आर्द्रां करोति तस्य शोणितैरिति भावः॥ वृष्टिर्यवं न यवमिव॰ ॰र्द्रीकरणे दृष्टान्तः॥६३॥

भीताय नाधमानाय ऋषये सप्तवध्रये॥ मायाभिरश्विना युवं वृक्षं सं च विचाचथः॥ ६४॥

वानरैः सह रामस्य सख्यप्रसंगमाह-भीतायेति अत्रेदं पुराणान्तरे उपाख्यायते, जांबवान् ब्रह्मणोंश ऋक्षराजो ज्ञातिभिर्निरस्तः स्वं राज्यं प्राप्तं तपश्चकार, तं च द्वौ युवानावागत्य ऊचतुः आवाभ्यामाप्यायितस्त्वं शत्रून् जेष्यसीति, स पुनस्तयोर्ज्येष्ठाय स्वदुहितरं दातुकामो यावत्किंचिद्विवक्ष्यति तावदेवान्तर्हितौ, तावेव पुनस्त्रेतायुगे सुग्रीवसहितः सन्ददर्श, तदा तौ दृष्टपूर्वौ

प्रत्यभिज्ञाय सुग्रीवमुपदिदेश, एताभ्यां सख्यं कुरु, एतौ तव कार्यं साधयितुं क्षमाविति, ततः सुग्रीवो हनुमद्द्वारा रामेण सह सख्यं चकार, ज्येष्ठभ्रातुः राज्यं तेन हृतान्स्वदारांश्चेच्छन् इति ॥ तत्र जांबवानार्तो भक्तः, सुग्रीवस्त्वर्थार्थी, हनूमांस्तु निष्कामः एतेषां क्रमेण रूपाण्याह— भीतायेति । भीताय ज्ञातिभ्यः यतः नाधमानाय उपतप्ताय ऋषये भूतपूर्वगत्या ब्रह्मणे सर्वमंत्रद्रष्ट्रे सप्तवध्रये वध्रिश्चर्मरज्जुः सप्तसंख्याः त्वगसृङ्मांसमज्जास्थिमेदःशुक्रसंज्ञा धातवः एव वध्रिरूपाणि बंधनानि यस्य तस्मै सप्तवध्रये । पार्थिवं पशुदेहं प्राप्ताय मह्यं मामनुग्रहीतुं भो अश्विना—अश्विनीकुमारवदतिरमणीयौ तच्छरीरोपाधिकौ वा सूत्रान्तर्यामिणौ मायाभिः मायाकृतेन मानुषवेषेण युवं युवां वृक्षं मदाश्रितं तपःस्थानभूतं समचथः समागतौ च। अनंतरं मय्यनुग्रहं

कृत्वा व्यचथश्च विगतौ च झटित्येवादर्शनं गतौ ।
अयं मंत्रः सकामभक्तानां गतिर्विलंबेन भवतीति
प्रकाशयति तथाविधश्च जांबवानिति योग्यत्वा
त्प्रकृतोपयोगि कथासूचकत्वाच्चोपन्यस्तः
यद्वा पुर्यष्टकेन प्राणज्ञानेन्द्रियकर्मेन्द्रियमनोभू-
ततमःकामकर्मात्मकेन सर्वे बद्धाः, एते ऋक्षवा-
नरास्तु ऋते कर्मक्षुदजायंत देवा इत्युक्तेःकर्म बंध-
हीनत्वात्सप्तवध्रयः । यद्यपि-"संयोगा विप्रयो-
गांताः"इति न्यायेन व्यचथ इत्येव वक्तव्यम्
"लोकतः परमार्थतोऽपि सकृद्विभातो ह्येष"-इति
श्रुतेः सकृद्दृष्टस्यात्मनो वियोगासंभवः,तथापि-
जांबवतः कामग्रस्तत्वाज्जातमपि दर्शनं न कृत-
कृत्यतामनयदिति ज्ञापनार्थं व्यचथ इति । अत
एव रामावतारेऽपि भगवान्न जांबवतो जामातृत्वमं-
गीचकार एकपत्नीव्रतव्याजेन,किंतु कृष्णावतारे
विलंबेनेति स्मर्यते ॥ ६४ ॥

प्रत्यभिज्ञाय ॰ ददामि ते निधेहि मे नि ते
कुरु, एतौ ॰ ॥ निहारमिन्मे हर निहारं
सुग्रीवो हरामि ते ॥ ६५ ॥

ज्ये

इ मे मह्यं पूर्वं देहि पश्चादहं सुग्रीवस्तु पूर्वं
हनू स्वार्थः पश्चादाराधनमित्यक्रमेण भजमानः प्राकृ-
भी तस्तत्स्वरूपमाह—मंत्रो देहि म इति—ते तुभ्यं
उप ददामि,तथा मे मदर्थं निधेहि—अहमपि ते निदधे
सु इति पूर्ववत् ॥ तथा निहारं प्रेषणीयं द्रव्यं मे
सम मह्यम् इत एव पूर्वं हर प्रापय,पश्चादहं ते तुभ्यं
बं निहारं निहरामि प्रापयामि । भृत्यद्वारा एवं
प्रा प्रार्थितो रामः सुग्रीवं पूर्वमनुगृह्य पश्चात्ततः
नी स्वकार्यसिद्धिमकामयतेत्यर्थः ॥ ६५ ॥

सू एवा हि त्वामृतुथा यातयंतं मघा
वेष विप्रेभ्यो ददतं शृणोमि ॥ किं ते
प्र

ब्रह्माणो गृह्णते सखायो ये त्वा या निदधुः काममिन्द्र ॥ ६६ ॥

एवं सकामौ जांबवत्सुग्रीवावनुगृह्य निष्कामे हनुमत्यनुग्रहं चिकीर्षुः रामं हनूमानाह—एवा हीति ॥ एव एवं शास्त्रदृष्टरीत्या हि निश्चितं त्वाम् ऋतुंथा काले काले यातयंतम् अंतर्यामितया यज्ञादौ विषये यत्नं कारयन्तं तत्फलभूतानि मघा मघानि धनानि च विप्रेभ्यः श्रद्धावद्भ्यो ददतं शृणोमि परन्तु—किं कथं ते त्वत्संबंधिनो ब्रह्माणो ब्राह्मणाः मादृशाः गृह्णते गृह्णन्ति, अपितु दीयमानमपि न गृह्णन्तीत्यर्थः । सखायो नि-ष्कामदासाः । अत एव ये त्वा या त्वयि कामं निदधुः,त्वत्काम्ययैव सर्वमहं करोमि न त्वत्तो-न्यद्वाञ्छामीत्यर्थः । इदं मंत्रत्रयं कथानुपयुक्तगु-णकथनपरत्वात्प्रसंगादुपन्यस्तम् ॥ ६६ ॥

कथा देवानां कतमस्य यामनि
सुमंतु नाम शृण्वतां मनामहे ॥ को
मृळाति कतमो नो मयस्करत्कतम
ऊती अभ्याववर्त्तति ॥ ६७ ॥

देहि मे ददामि त इति वदतः सुग्रीवस्य कार्यं वालिवधाख्यं येभिरौक्षद्वृत्रहत्याय वज्रीति सूचितं पूर्वमेव कृत्वा रामः स्वकार्यं चिन्तयते—कथा देवानामित्यादिना । कथा केन प्रकारेण शृण्वतां मद्वाक्यमाकर्णयतां देवानां वानररूपाणां मध्ये कतमस्य नामस्वरूपं सुमंतु शोभनतया मंतव्यं मनामहे जानीमहे । यामनि सीताप्रवृत्त्यर्थं गमने विषये को नोऽस्मान् मृळाति सुखयेत् । कतमो वा नोऽस्माकं मयः सुखं करत् कुर्यात् । कतमो वा ऊती अस्मदीयां विभूतिं सीताख्यां

श्रियम् अभ्यावर्वर्तति अभ्यानयति, तं न जानीमः इति भावः ॥ ६७ ॥

**क्रतूयंति क्रतवो हृत्सु धीतयो वेनंति वेनाः पतयंत्यादिशः ॥ न मर्डिता विद्यते अन्य एभ्यो देवेषु मे अधिकामा अयंसत ॥ ६८ ॥**

क्रतवः साक्षात् सत्यसंकल्पा इत्यर्थः । क्रतूयंति क्रियामात्मन इच्छंति अस्मत्सेवां कर्तुमिच्छन्ति । हृत्सु धीतयः हृदयेषु धीमन्तः वेनंति शोभन्ते । वेनाः कमनीयाः । आसमंतात् दिशः पतयन्ति गच्छंति । एभ्यो वानररूपेभ्यो देवेभ्योऽन्यो न मर्डिता सुखयिता न विद्यते । मे मम कामाः मनोरथाः देवेषु एषु अयंसत अपूर्यन्त ६८

**ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शयावंतु वाजिनो मितद्रवः ॥ सहस्र-**

सा मेधसा ताविव त्मना महो ये धनं समिथेषु जभ्रिरे ॥ ६९ ॥

इत्यादि चिन्तयित्वा वानरान्प्रति वदति– तेन इति । ते अर्वन्तः शीघ्रगतयो वाजिनो वानराः नोऽस्माकं हवम् आह्वानं शयावंतु शृण्वन्तु । कीदृशाः हवनश्रुतः हवनं शृण्वंति ते, तथा विश्वे सर्वे, मितद्रवः परिमितगतयः । ये त्मना आत्मना सहस्रसाः सहस्रैः संमितस्य धनादेः संभक्तारः मेधसा ताविव यज्ञ इव समिथेषु संग्रामेषु महः महनीयम् धनं शत्रूणां वित्तं जभ्रिरे हृतवंतः । यज्ञे ऋत्विज इव स्वभृतमितिभावः॥६९॥

प्र वो वायुं रथयुजं पुरंधिं स्तोमैः कृणुध्वं सख्याय पूषणम् ॥ ते हि देवस्य सवितुः सवीमनि क्रतुं सचंते सचितः सचेतसः ॥ ७० ॥

भो देवाः वः युष्माकं मध्ये वायुं वायुपुत्रं रथयुजं देहधरं पुरः धीयत इति पुरःसरं स्तोमैः स्तुत्या कृणुध्वं सख्याय सखिवत् कार्याय पूषणं पोषणं मत्कार्यार्थमिमं स्तुवध्वमित्यर्थः । हि यतः ते स्तोमासः सवितुर्देवस्य सवीमनि प्रसवे लोके क्रतुं संकल्पं सचंते संपादयंति । सचितः चेतनस्य पुंसः सचेतसः सहृदयस्य स्तुतयः सहृदयं कार्ये प्रवर्तयंतीत्यर्थः ॥ ७० ॥

त्रिःसप्त सस्रा नद्यो महीरपो वनस्पतीन्पर्वताँ अग्निमूतये॥ कृशानुमस्तॄन् तिष्यं सधस्थ आ रुद्रं रुद्रेषु रुद्रियं हवामहे ॥ ७१ ॥

त्रिरावृत्ताः सप्त त्रिःसप्त एकविंशतिः । सस्राः सरंत्यः नद्यः नदीः महीरपः समुद्रं वनस्पतीन् पर्वतान् अग्निं च वाडवम् । तथाकृशानुं कल्पां-

ताग्निं अस्तॄन् अस्यंति क्षिपंति तान् शेषका-
लाग्निरुद्रादीन् तिष्यं पुष्योपलक्षितं नक्षत्रमंडलं
च सधस्थे सह तिष्ठंत्यस्मिन्निति सर्वलोकावासे
कृत्स्नब्रह्मांडे आसमंतात्स्थितं वस्तुजातं प्रति
रुतं शब्दं कुर्वन्नेव द्राति गच्छति गर्जन्नेव ब्रह्मां-
डपिंडमाक्रांतुं शक्तो रुद्रस्तं हनुमद्रूपं रुद्रेषु मध्ये
रुद्रियं रुद्रकर्मार्हं शत्रुसंहारक्षमं हवामहे ऊतये
स्वकार्यसमृद्धये स्वेष्टसिध्यर्थमित्यर्थः ॥ ७१ ॥

अपश्यमस्य महतो माहित्वममर्त्यस्य
मर्त्यासु विक्षु ॥ नाना हनूविभृते संभ-
रेते असिन्वती बप्सती भूर्यत्तः॥७२॥

एवमाज्ञातस्य हनुमतो रूपं वर्णयति अपश्य-
मिति । अपश्यमस्य महतो महित्वं माहात्म्यम्
अपश्यं दृष्टवानस्मि । मर्त्यासु विक्षु मर्त्यलोके
एवाऽस्य समुद्रं क्रामतो रूपं दृष्टवानस्मि । तथा-

अस्य हनू मुखफलके नाना पृथक् विभृते विहते व्यात्तं मुखं चाऽपश्यमित्यर्थः ॥ ते एव हनू संभरेते संहरेते विश्वस्य संहारं कुरुतः । असिन्वती अबध्नन्ती, अन्योन्यमस्पृशंत्यौ । बप्सती ललमाने । भूरि बहुलम् अत्तः भक्षयतः । प्रश्वासवेगेनैव सर्वमस्योदरे प्रविशति नं तु हन्वोर्मेलनेनेति भावः ॥ ७२ ॥

गुहाशिरो निहितमृधगक्षी असिन्वन्नत्ति जिह्वया वनानि ॥ अत्राण्यस्मै षड्भिः संभरंत्युत्तानहस्ता नमसाऽधि विक्षु ॥ ७३ ॥

अस्य शिरो गुहा गुहायां निहितं वानररूपत्वाच्छिरोऽत्यल्पमित्यर्थः । तथाअक्षी अक्षिणी ऋधक् तले निहिते गभीरे इत्यर्थः । असिन्वन् मुखफलके अबध्नन् असंयोजयन्नेव वनानि ज-

लानि, वनस्थानि फलादीनि वा जिह्वयैवाति-
दीर्घीकृतयाऽत्ति भक्षयति । अस्मै अत्राणि अम-
त्राणि वर्णलोपश्छांदसः भोजनपात्राणि अन्न-
पूर्णानि षड्भिः दूतैः संभरंति । देवाः सीताज्ञया
खलु यक्षा एनं सेवन्त इति भारते दृष्टम् । विक्षु
प्रजासु अधि उपरि स्थिताः गंधर्वादयः नमसा
नमस्कारेण निमित्तेन उत्तानहस्ताः बद्धांजलयो
भरंतीति संबंधः ॥ ७३ ॥

प्रमातुः प्रतरं गुह्यमिच्छन्कुमारो न
वीरुधः प्रसर्पदुर्वीः॥ससं न पक्वमवि-
दच्छुचंतं रिरिह्वांसं रिप उपस्थे
अंतः ॥ ७४ ॥

प्रमातुरिति–यथा पुष्पाऽन्वेषणपरः कुमारो
वीरुध ओषधीः प्रसर्पति, एवं हनुमान्मातुः
सीतायाः सकाशात् प्रकृष्टतरं गुह्यं गुह्यसंदेशं

इच्छन् उर्वीः भूप्रदेशान् प्रसर्पत् प्रासर्पत् । ससं सस्यक्षेत्रं पक्कमिव नेत्युभयत्रोपमार्थे तद्वत् पांडुरमित्यर्थः । यतः शुचन्तं शोचन्तं सीताया आत्मानम् अविदत् शोकेन लिंगेन पक्कक्षेत्रच्छायेया च ज्ञातवान् । रिरिह्वांसं लेलिहानं रावणं ग्रसितुमित्यर्थात् रिपः पृथिव्या अंतर्मध्ये ह्वपस्थे गुप्ते स्थाने स्थितमिति शेषः । प्रमातुः प्रतरं गुह्य-मिच्छन्नित्युत्तरमंत्रे प्रकर्षेण तीर्त्वा मातुर्गुह्यमिच्छन्निति लिंगाद्धनू गुहा शिर इत्यादि लिंगाच्च सीतान्वेषणार्थं समुद्रं तारितुकामस्य हनुमत एवैतद्रूपं वर्ण्यत इति सहृदयैरेव ज्ञेयम् ॥ ७४ ॥

इषुर्न धन्वन्प्रतिधीयते मतिर्वत्सो न मातुरुप सर्ज्यूधनि ॥ उरुधारेव दुहे अग्र आयत्यस्य व्रतेष्वपि सोम इष्यते ॥ ७५ ॥

एवं रूपस्य हनुमतः सीतादर्शनं सीताहनु-
मतोः संवादादिकं च वर्ण्यते–इषुर्न धन्वन्नित्या-
दिना भूयसा प्रबंधेन । तत्रेदं दशर्चं सूक्तं सोम-
रूपी विष्णुर्देवता । इषुर्बाणो नशब्द उपमार्थे
स यथा धन्वन् धनुषि प्रतिधीयते संयोज्यते ।
एवं मतिर्मेधावी मतिशब्दस्य मेधाविनामसु
पाठात् मेधावी हनुमानपि प्रतिधीयते प्रेर्यते गग-
नमार्गेण सीतारूपं लक्ष्यं प्रापयितुमिति भावः ।
स प्रतिहितो ऊधनि गोःक्षीराशये वत्सो न वत्स
इव मातुः सीतायाः समीपे स्तनं पातुं शिशुरिव
उपसर्जि उपसृष्टोभूत, न तु बाणवल्लक्ष्यभूतां बि-
भेदेत्यर्थः । सा च माता अग्रे आयती वत्सस्या-
भिमुखमुपसर्पती गौरिव उरुधारा स्थूलया प्रेम-
धारया दुहे दुग्धे तम् इष्टवाक्येनाप्यायितवती ।
ननु सतीमतिसुंदरीं च सीतामुपसर्पतोस्य चित्त-
ः कथं नासीदित्यत आह–अस्य व्रते-

ष्विति । अस्य रुद्रस्य व्रतेषु ब्रह्मचर्यादिषु प्राप्तव्येषु सोमः सोमयागादिकं कर्मवृंदमिष्यते, कर्मभिः शुद्धचित्तस्य परवैराग्यवतः कामविकारशंकैव नास्तीत्यर्थः ॥ ७५ ॥

उपो मतिः पृच्यते सिच्यते मधु मंद्राजनी चोदते अंतरासनि ॥ पवमानः संतनिः प्रघ्नतामिव मधुमान्द्रप्सः परिवारमर्षति ॥ ७६ ॥

उपो—उपैव समीपे एव मतिर्मेधावी हनुमान् पृच्यते संयुज्यते, तेन च मातुः कर्णे मधु मधुरम् अमृततुल्यं वाक्यम्—"जयत्यतिबलो रामो लक्ष्मणश्च महाबलः । राजा जयति सुग्रीवो राघवेणानुपालितः ॥ दासोऽहं कोशलेंद्रस्य राघवस्य महात्मनः" इत्यादिकं सिच्यते श्राव्यते ॥ ततश्च तां हनुमति जातविस्रंभां मातरं मंद्राजनी वाग्दे-

वता अंतरासनि मध्ये मुखे स्थित्वा चोदते वक्तुं प्रेरयति, मंद्राजनीशब्दो वाग्नामसु पठितः भाष्ये तु मंदुक्तस्य प्रेरयित्री सोमस्य धारेति व्याख्यातम् ॥ वाग्देवतया प्रेरिता सा यद्वक्ति तदाह—पवमान इति । पुनाति शोधयतीति पवमानः पापनोदन्वेषको विष्णुः एकोपि प्रघ्नतां प्रकर्षेण निघ्नतां कालाग्निरुद्राणां संतनि निबिडतरः समुदाय इव । द्रप्सः द्रप्सवदुद्रिक्तस्य रावणस्य षष्ठ्याः सु इत्यादेशः । परिवारम् अर्षति समुदायं गच्छति प्रश्नार्थे लेट् । रावणं सपरिवारं भस्मीकर्तुं किमेष्यतीति पप्रच्छेत्यर्थः कीदृशः पवमानः मधुमान् मयि प्रीतिमान् ७६॥

संम्राजो ये सुवृधो यज्ञमाययुरपारि-
हृता दधिरे दिवि क्षयम् ॥ ताँ आवि-

वास नमसा सुवृक्तिभिर्महोआदित्याँ अदितिं स्वस्तये ॥ ७७ ॥

सिच्यते मध्वित्येतत्प्रदेशांतरस्थेन मंत्रेण विवृणोति–संम्राज इति–ये सम्राजश्चक्रवर्तिनः सुवृधः सुतरां वृद्धिमंतः यज्ञं विश्वामित्रस्य आययुः आगतवंतः । अपरिह्वृता अकुटिलाः, दिवि परशुरामीये स्वर्गलोके क्षयं नाशं दधिरे धृतवंतः । एवं विश्वामित्रयज्ञगमनं परशुरामलोकभंगं चाभिज्ञानमुक्त्वा स्वस्य सम्राट् संबंधित्वमाह–तानिति । तान् श्रीरामभद्राख्यान् आदित्यान् आदित्यवंशजान् । आवि इत्युपसर्गद्वयसंबंधात् वास इत्यस्यावृत्तिः, उवासेत्युत्तमैकवचने लिटि अभ्यासलोप आर्षः । तान् आउवास तेषां समीपे वासं कृतवानस्मि । नमसा नमस्कारेण दास्येनेत्यर्थः ॥ सुवृक्तिभिः सुतरां

वृत्रयो वृजिनानि महान्ति संकटानि। तैर्हेतुभिः अदितिम्। "इयं वा अदितिः" इति श्रुतेः। पृथ्वीं तज्जां त्वाम् उद्दिश्य स्वस्तये कल्याणाय त्वां भर्त्रा सह संगमयितुमित्यर्थः। विवास प्रवासमपि कृतवानस्मि रामदासोहं त्वामुपागतोस्मीत्यर्थः। पक्षे विष्णुभक्तोहं यज्ञादीनामनित्यफलतां ज्ञात्वा शुद्धबोधोल्लासिनीं श्रद्धां त्वां प्राप्तोस्मीत्यर्थः॥ अक्षरार्थोपि तथैव योज्यः॥ ७७॥

अव्ये वधूयुः पवते परि त्वचि श्रथ्नीते नप्तीरदितेर्ऋतं यते। हरिरक्रान्यजतः संयतो मदो नृम्णा शिशानो महिषो न शोभते॥ ७८॥

एवं पवमानः संततिरित्यादिना स्वस्मिन्नात्मानुग्रहं पृष्ट्वा स्वस्य विशुद्धतां मंत्रद्वयेनाह— सीता—अव्ये इति। अव्ये अवीनारी रजस्वला

तस्यां योग्यं कर्म अन्यं मैथुनं तस्मिन् अन्ये निमित्ते वधूयुः वध्वा पुत्रभार्यया सह यौति मिश्री भवतीति वधूयुःदुष्टकामुकोपिरावणः त्वचि परिप-वते शुद्ध्यति मदप्राप्त्या पांडुरो भवतीत्यर्थः यतः अदितेः अदितिं सीतां मां प्राप्य ऋतं सत्यं ब्रह्मचर्यम् एति प्राप्नोतीति ऋतं यत् तस्मै ऋतंयते रावणाय तत्परिजनः नप्तीः नयतंति स्वर्गादिति नप्त्य उर्वश्याद्याः स्त्रियस्ताः श्रथीते शिथिलाः करोति बलादाहरति । सीताया अलाभात्तप्यमानं रावणं चिकित्सितुमानीता अपि रंभादयस्तस्मै न रोचंत इत्यवज्ञातास्ता भवंतीत्यर्थः । नन्वीदृशोपि बलात्सीतां कुतो न कामयत इत्यत आह—हारिरिति । हरिः सोम-श्चित्ताधिष्ठाता अक्रान् एनम् आक्रांतवान् । यजतः संगतिकर्तॄन् रावणादीन्, अत एव तेषां मदस्संयतो निगृहीतः । अन्यथा पांडुवन्मरण-

भयमपि त्यक्त्वा ते परदारानाक्रमेयुः, अत एव नृम्णा कामबलेन शिशानो दीप्यमानो महीषो महान् रावणो न शोभते, न पुष्यत्यपि तु कृश एव भवति ॥ ७८ ॥

**उक्षा मिमाति प्रतियंति धेनवो देवस्य देवीरुपयंति निष्कृतम् ॥ अत्यक्रमीदर्जुनं वारमव्ययमत्कं न निक्तं परि सोमो अव्यत ॥ ७९ ॥**

पूर्वोक्तमेव विवृणोति—उक्षेति । उक्षेवोक्षा रेतः सेचनकामः मिमाति आत्मानं हिनस्ति, अन्यत्रारमणात् यतो धेनव इव धेनवः आगताः दिव्यस्त्रियः प्रतियंति परावृत्य गच्छंति, तावतैव देवस्य धर्मस्य देवीर्देवांगनाः निष्कृतिम् आनृण्यम् उपयंति, रावणकृतो धर्मस्तस्मै दिव्यांगनाः कृतार्थोऽभूत् न हि तस्य भोगपर्यंतं व्या-

पारोस्ति, रावणस्तु स्वदोषान्न भोगभागभूत् देवदत्तमपि सुखम् अधर्माधिक्यान्नश्यतीति भावः । अतीति—अर्जुनं कृष्णावतारे अर्जुनवृक्षतां प्राप्तं नलकूबरं भाविवृत्त्या भूतवृत्त्या वाऽर्जुनशब्दवाच्यम् अव्ययं याति मनसा गच्छतीत्यव्ययम् रंभा संभोगार्थिनं वारं बालं स्वपुत्रम् अत्यक्रमीत् । वधूयुः रंभाया आक्रमणेनातिक्रांतवान्, अतस्तेन शप्तो मरणभयान्न सीतां बलाद्भोक्तुमिच्छति । ननु पांडुवन्मरणभयमप्यतिकामुकत्वात्कुतो न त्यजतीत्यत आह—अत्कमिति।सततं गच्छतीत्यको नित्यप्रवासी परिव्राट्, न शब्द इवार्थे परिव्राजमिव नित्तं निर्णिक्तं सीताविषये दृढब्रह्मचर्यं तं सोमश्चित्ताधिष्ठाता सकलराक्षससंहारमिच्छन् पारि परितः चित्तप्रभावात् कामात् अव्यत अरक्षत् । अतोऽयं मां न स्पृष्टवान्

यदि स्पृशेत्, तर्हि नलकूबरशापेन सद्यो नश्येदित्यात्मशुद्धिरुक्ता ॥ ७९ ॥

अमृक्तेन रुशता वाससा हरिरमर्त्यो निर्णिजानः परिव्यत ॥ दिवस्पृष्टं बर्हणा निर्णिजे कृतोपस्तरणं चम्वोर्नभस्मयम् ॥ ८० ॥

अथादृष्टपूर्वां मां त्वं कथं ज्ञातवानिति प्रष्टुमिच्छन्तीं सीतामालक्ष्य हनुमानाह-अमृक्तेनेति। अमर्त्यः अप्राकृतो हरिर्वानरो मद्रूपी अमृक्तेन असंमार्जितेन मलिनेन रुशता कनकतंतुमयत्वात्सूक्ष्मत्वाच्च दीप्यमानेन वाससा वस्त्रेण वियोगिनीचिह्नेन परिव्यत पर्यवेष्टयत् ज्ञातवानित्यर्थः। कीदृशो निर्णिजानः शोधयन् सीतामन्वेषयन्नित्यर्थः । दिवः सुखस्य पृष्ठमिव पृष्ठम् उच्चस्थानं यदपेक्षयाऽन्यन्मन्दानन्दस्थानं भर्तुर्नास्ति—“सर्वेषामानंदानामु-

पस्थ एकायनम्" इति श्रुतेः॥ताहशं रामस्य कल-त्रं त्वां नभस्यं नभस्मायं नभोऽव्याकृतम् आ-काशः शक्तिर्मायेति पर्यायाः तन्मयं परिव्यतेति संबंधः॥ यत् निर्णिजे कंटकनिरसनेन ब्रह्मांड-शोधनाय चम्वोः वानरराक्षससेनयोर्बर्हणा नि-र्बर्हणाय भस्मीभावाय उपस्तरणमिव कृतवान् परमेश्वरः। अडभावश्छांदसः। यथा—द्र्यव-दानप्रक्षेपार्थिना स्रुचि उपस्तरणं क्रियते, तद्वच्चमू-द्रयहोमार्थिना धात्रा त्वं निर्मितासीत्यर्थः॥८०॥

सूर्यस्येव रश्मयो द्रावयित्नवो मत्स-रासः प्रसुपः साकमीरते॥ तंतुं ततं परि सर्गास आशवो नेंद्रादृते पवते धाम किंचन॥८१॥

सूर्यस्येवेति—यथा सूर्यस्य रश्मयः साकं यु-गपत् द्रावयित्नवो गमनशीला आशवः शीघ्राश्च,

एवं मत्सरासः अहमिव सरंति ते मत्सरासः म- ज्जातीयाः हरयो युगपत्सर्वत ईरते गच्छंति प्र- सुपः–प्रस्वपंति ते प्रसुपः स्थावरालोकास्तान्प्रति ईरते । कीदृशाः ततं महांतं तंतुम्–"प्रजा वै तन्तुः" इति श्रुतेः ॥ प्रजां तद्धेतून् दारानित्यर्थः । परि परिमार्गितुं सर्गासः सृज्यंत इति सर्गा नि- सृष्टाः स्वामिनेति शेषः । तेषां मध्ये मयैव त्वं दृष्टासीति वक्तुमशक्नुवन्नाह–नैन्द्रादिति । इन्द्रा- दृते इन्द्रानुग्रहं विना किंचन किमपि सत्त्वं धाम इन्द्रस्यैव गृहं सीतारूपं न पवते न शोधनायावग च्छति । रामानुग्रहात्त्वामहं दृष्टवानस्मीत्यर्थः ८१

सिंधोरिव प्रवणे निम्न आशवो वृष- च्युता मदासो गातुमाशत ॥ शंनो निवेशे द्विपदे चतुष्पदेऽस्मे वाजाः सोम तिष्ठंतु कृष्टयः ॥ ८२ ॥

नेन्द्राद्दत इत्युक्तं तदेव स्पष्टयति—सिंधोरिवेति । सिन्धोः नद्याःप्रवणे निर्झरप्रपाते इव यथा प्रविष्टाः वृषच्युताः स्वातंत्र्यलक्षणाद्धर्मात् च्युताः प्रवाहवशा भवंति, एवमाशव शीघ्रगामिनोपि वानराः निम्ने नीचे पातालमध्ये प्रविष्टाः संतः वृषाः मासेन सीताशुद्धिमानेष्याम इति स्वप्रतिज्ञात्मकः सेवाधर्मः ततः च्युताः प्रतिज्ञाया अकरणात् नरकंगता इव जाता इत्यर्थः । ते पुनर्मंदासः सोमं राजानं स्तुतिभिर्मादयंतः तत्प्रसादाद्गातुं पृथिवीम् आशत प्राप्तवंतः गातुं पदं पृथिवीनामसु पठितम् भाष्ये त्वन्यथा व्याख्यातम् । स्तुतिफलं प्रार्थ्यमानं तावद्दर्शयति—शमिति । हे सोम नः अस्माकं संबंधिनो रामस्य निवेशे गृहे दारेषु शं कल्याणं तिष्ठतु सर्वदास्त्वित्यर्थः । तथा नः द्विपदे मानुषे रामादिरूपे चतुष्पदे ऋक्षवानररूपे च शं तिष्ठतु,

तथा अस्मे अस्माकं वाशाः संग्रामाः कृप्यः शत्रुकर्षणं क्षमास्तिष्ठंतु उपस्थिता भवंतु । एवं प्रार्थनापूर्वकम् आनः पवस्वेति तृचेन सोमाभिधं विष्णुं स्तुत्वा तत्प्रसादाद्बिलान्निर्गत्य भूमिं प्राप्ता इत्यर्थः ॥ ८२ ॥

शुचिः पुनानस्तन्वमरेपसमव्ये हरिर्न्यधाविष्ट सानवि ॥ जुष्टो मित्राय वरुणाय वायवे त्रिधातु मधु क्रियते सुकर्मभिः ॥ ८३ ॥

ततो बिलान्निर्गत्यापि सीतायाः प्रवृत्तिमलभमानानां पुनस्तमेव त्रिरस्मा इत्यादिभिरुत्तरस्य सूक्तस्य दशर्चस्य रेणुदृष्टस्य सप्तभिर्ऋग्भिः स्तुतवतामप्यस्माकं भयमागतमित्याहाष्टम्या शुचिः पुनान इति । एकवचनं जात्यभिप्रायम्, शुचिः स्वभावशुद्धोपि अरेपसं निष्पापमपि

तन्वं तनुं शरीरं पुनानः उपवासैः शोधयन् हरि-
र्वानरः सानवि सानौ मेरुशिखरे अंध्ये संगमे
निमित्ते नितराम् आधाविष्ट धावनं कृतवान्
प्रतिज्ञाभंगाद्भीतो वानरगणोऽनशनव्रतेन अभय-
स्थानं ब्रह्मलोकं गंतुं त्वरावानभूदित्यर्थः। ततः
सुकर्मभिः सुकृतवता संपातिना पक्षिणा बहुत्वं
पूजायाम् त्रिधातु क्लीबत्वं छांदसम्, वातपित्त-
कफात्मकं वानरशरीरं मधु आत्मनो अन्नं क्रियते,
वर्तमानसामीप्ये वर्तमानवन्निर्देशः। अति-
क्षीणानामेषां मध्ये योयो मरिष्यति, तमहं
भक्षयिष्यामीति मनस्यकरोदित्यर्थः॥ कीदृश-
स्त्रिधातुः जुष्टः मित्रादीनां प्रीत्यर्थं सम्यगेतैःसे-
वितस्तर्पितः। तथा हि—सुपक्वमाहारं भुंजानस्या-
ऽपि देहस्थतोऽग्निस्तुष्यति, सुरसं भुंजानस्य रस-
नादेवता वरुणस्तुष्यति, सुस्पर्शं वसनं वसानस्य
त्वग्देवता वायुस्तुष्यति॥ ईदृशानां देहानां

भक्षणेनाहं शुद्धः पुष्टश्च भविष्यामीति संपाते राशयः ॥ ८३ ॥

पवस्व सोम देववीतये वृषेन्द्रस्य हार्दि सोमधान मा विश ॥ पुरा नो बाधाद्दुरितातिपारय क्षेत्रविद्धि दिश आहा विपृच्छते ॥ ८४ ॥

तं च जिघत्सुमायांतम् अभिप्रेक्ष्य पुनः सोमं स्तुवंति शेषेण ऋग्द्वयेन जीवनार्थम्–पवस्वेति। हे सोम त्वं वृषा अभिमतफलवर्षुकः देववीतये देवानां पाता प्रयतस्व यतस्त्वम् इन्द्रस्य रामस्य हार्दि हृदयंगमं सोमधानं सोमो धीयतेऽनेनेति व्युत्पत्त्या सोमयागाधिकारे मुख्यं निमित्तं स्त्रीरूपम् आविश प्रविश सोमेनाहं यक्ष्ये इति यथा सीता संकल्पयति, यथा च सोमेन देवाः तृप्यंति, तथा रावणवधेन सीताप्रो-

रसाहनेन च संपादयेत्यर्थः। पुरा प्राक् नोऽस्माकं बाधात् अनेन पक्षिणा वधात् दुरिता दुरितानि दुर्मरणानि अतिपारय संकटान्यतिक्रम्योत्तारय इत्युक्त्वा जटायुं स्तुवंति । हि प्रसिद्धः तीक्ष्ण-दृष्टिर्जटायुनामा गृद्ध्ःक्षेत्रवित् सीतास्थानवित् विपृच्छते सीतायाः गतिं विशेषेण पृच्छते रामाय दिशःदिशं संज्ञया आह उक्तवान् । सः रामार्थं मृतोपि किंचिद्रामकार्यं कृतवान् । वयं तु व्यर्थमेव म्रियामह इत्यर्थः ॥ ८४ ॥

हितो न सप्तिरभिवाजमर्षन्द्रस्येंदो जठरमापवस्व ॥ नावा न सिन्धुमति-पर्षि विद्वाञ्छूरो न युध्यन्नव नो निदः स्पः ॥ ८५ ॥

हितो नेति ॥ हे इंदो सोमाभिध श्रीविष्णो रामभद्र हितो हितकरो नेत्युपमार्थे यथा—सप्ति-

रश्वः वाजं संग्रामं गच्छति,तथा-त्वं वाजम् अर्षं अभ्यर्ष अभिमुखं गच्छ । ततो दारहरान् शत्रून्हत्वा दारैः संगतःसन् इंद्रस्य हविर्भोक्तुः स्वेनैव सोमरूपेण हविषा जठरम् उदरम् आपवस्व प्रविश । सोमयागान्कुर्वित्यर्थः । नाधा नौकायानेन यथा सिन्धुं नदीं नाविका अतिपर्षि अतिपारयन्ति, एवं त्वम् अस्मान् संकटानि अतिपर्षि अतिपारय । कीदृशो विद्वान् अस्माकं चित्तं जानन् शूरो न युध्यन् शूर इव शत्रून् प्रहरन् नोस्माकं निदो निंदकान् व्यर्थमेते वराकाः मृता इत्येवंवादिनो राक्षसान् अवस्पःआवङ्मुखं जहि स्पृहि हिंसायाम् । 'बहुलं छंदसि' इति श्नाप्रत्ययस्य लुक् तिपि गुणे हल्ङ्यादिना तिपो लोपः ॥ ८९ ॥

आदक्षिणा मृज्यते शुष्म्य। ३ सदं वेति द्रुहो रक्षसः पाति जागृविः ॥

हरिरोपशं कृणुते नभस्पय उपस्तिरे चम्बो ३ र्ब्रह्मनिर्णिजे ॥ ८६ ॥

तदेवं स्वामिभक्तान् वानरान् ज्ञात्वा संपातिरप्यनुजग्राहेत्याह—ऋषभो वैश्वामित्रा नवर्चेन सूक्तेन आदक्षिणेत्यादिना । शुष्मी बलवान् हरिर्वानरः आ दक्षिणा दक्षिणदिगभिमुखम् आसृज्यते आज्ञाप्यते सीतान्वेषणार्थी त्वं दक्षिणस्यां दिशि लंकायां तस्या अन्वेषणं कुर्वित्याज्ञाप्यते, अर्थात् सूक्तांते दृष्टेन दिव्येन सुपर्णेनेति गम्यते । एवमाज्ञप्तमात्रो हरिः आसदम् आसीदंत्यस्मिन्निति रामस्य गृहं सीतारूपं वेति प्राप्नोति । तत्प्राप्य जागृविः जागरूकः सन् द्रुहो द्रोग्धुः रक्षसो रावणात् पातिः आत्मानमिति शेषः, स एव हरिः ओपशं सर्वस्य धारकं नभः अव्याकृतं मायामयं सीताख्यं पयः पयस्वत् प्रस्रवयुक्तं

कृणुते करोति, वत्सं गौरिव सीता तमवेक्ष्य स्निग्धा भवतीत्यर्थः । कस्मै प्रयोजनाय–चम्वोः वानरराक्षससेनयोः उपस्तिरे उक्तलक्षणाय तत्पूर्वकाय चम्वोः संग्रामाग्नौ होमायेत्यर्थः । होमस्यापि प्रयोजनं ब्रह्मनिर्णिजे ब्रह्मणः ब्रह्मांडस्य कंटकोद्धरणेन शोधनाय, तेन कंटका एव मृताः, वानरास्तु मृता अपि पुनरुत्थापिता इति ध्वनितम् ॥ ८६ ॥

प्रकृष्टिहेव शूष एति रोरुवदसूर्यं १ वर्णन्निरिणीते अस्यतम् ॥ जहाति वाव्रिं पितुरेति निष्कृतमुपप्रुतं कृणुते निर्णिजं तना ॥ ८७ ॥

आसृष्टो हरिः कथं तां दिशं गतवानित्यत आह–प्रकृष्टिहेवेति । स आसृष्टो हरिः शूषः सीतायाः शोधकः कृष्टिहेव कृष्टयः कर्षकाः लोकानां

पीडका राक्षसास्तान्हंतीति तथा तेषां काल इव क्रूरः प्रैति प्रकर्षेणं गच्छति । रोरुवत् गर्जन् अस्य कर्षणकर्तुः रक्षोगणस्य वर्णं मुखच्छायाम् असूर्यम् अतिक्रूरं तं प्रसिद्धं निरिणीते निर्गमयति आगतमात्रो रावणादीन् दीनान् करोति किं च वव्रिम् आवरणम् अल्पकायस्वरूपं जहाति त्यजति महद्रूपं धारयतीत्यर्थः । तथा—पितुः वायोः निष्कृतं निश्चितं कृतं वेगवत्त्वम् एति प्राप्नोति ततश्च उपप्रुतं सीतायाः समीपं गंतुं प्रुतं प्लवनं कृणुते करोति निर्णिजं विशुद्धं यथा स्यात्तथा उपप्रुतं कृणुते तना विस्तारेण महता रूपेण ॥ ८७ ॥

अद्रिभिः सुतःपवते गभस्त्योर्वृषायते नभसा वेपते मती ॥ स मोदते नसते

साधते गिरा नेनिक्ते अप्सु यजते परीमणि ॥ ८८ ॥

अद्रिभिरिति—स हरिः मध्येमार्गम् अद्रिभिः मैनाकपर्वतेन समुद्रमध्यादुद्गतेन सुतः प्रस्तुतो मयि विश्रमस्वेति आज्ञप्तः सन् तं गभस्त्योः बाहुभ्यां पवते गच्छति । हस्तस्पर्शमात्रेण तं संभावयति, न तु तस्य पृष्ठे तिष्ठतीत्यर्थः । यतः वृषायते वृषवद्बलं स्वीयं प्रकाशयति, अत एव नभसा आकाशेन वेपते सर्वत्र गच्छति । मती मेधावी पूर्वसवर्णः समती मत्या वा मोदते अनेनाहं मानित इति हृष्टो भवति । अतएव गिरा नसते वाङ्मात्रेण तत्र संश्लिष्टो भवति । साधते स्वकार्यं च साधयति, यतोयम्, अप्सु तीर्थरूपासु नेनिक्ते आत्मानं शोधयति, तथा परीमणि परितो मीयते इति परिमा देहो यज्ञभूर्वा

तत्र यजते आत्मानमंतर्यामिणं वा देवान्वा पूजयते। स्वसुकृतबलेनैव सर्वं साधयति, न त्वन्यबलेनेति भावः ॥ ८८ ॥

परिद्युक्षं सहसः पर्वतावृधं मध्वः सिंचंति हर्म्यस्य सक्षणिम्। आय-स्मिन् गावःसुहुताद ऊधनि मूर्द्धञ्छ्री णंत्याश्रियं वरीमभिः ॥ ८९ ॥

परीति—सहसो वेगात् परिद्युक्षं परितः कार्त्स्न्येन दिवम् अंतरिक्षं क्षिणोत्यल्पीकरोति तम्। कृत्स्नमप्यंतरिक्षं हरेर्वेगस्य न पर्याप्तमित्यर्थः। अत एव पर्वतावृधं पर्वतं वर्द्धयंतं मैनाकं पूर्वोक्त-रीत्या मानयंतं तं मध्वो मदकराः देवाः परिसिं-चंति पुष्पवृष्ट्यादिना। कीदृशं तं हर्म्यस्य शत्रुपुरस्य सक्षणिम् अभिभावकं यस्मिन् हर्म्ये गावःसुहुतादः सुष्ठु हुतं दत्तमदंति ताः सम्यक्पा-

लिताः,ऊधनि ऊधःप्रभवे क्षीरे अग्रियं श्रेष्ठं सोमं मूर्धनि उच्चस्थाने प्राप्तव्ये निमित्ते सति वरीमभिः उरुतरैर्यज्ञादिभिर्हेतुभिः श्रीणंति मिश्रयंति यतोत्र सोमयागादयःप्रवर्तंते इत्यर्थः। तथा चोक्तम्-"अग्निहोत्रं च वेदाश्च राक्षसानां गृहे गृहे" इति ॥ ८९ ॥

सम्री रथं न भुरिजोरहेषत दश स्वसारो अदितेरुपस्थ आ ॥ जिगादुप ज्रयति गोरपीच्यं पदं यदस्य मतुथा अजीजनन् ॥ ९० ॥

हर्म्यस्य सक्षणिमित्येतद्विवृणोति-समीति। ईमित्यंतलोप इत्यादिना मकारस्य लोपःप्रकरणात्। स खेच्चरो हनुमान् अदितेः पृथिव्याः उपस्थे श्रेष्ठस्थाने आजिगात् आगतः सिंधोः पारं प्राप्तः, तत्रापि गोः पृथिव्याः अपीच्यम् अत्यंतरम-

णीयम् अस्य रक्षसः पदं स्थानं लंकाख्यं यत्
मतुथाः मननीयगाथाः स्तोतव्याः शिल्पिनो
विश्वकर्मादयः अजीजनन्, तत् उप उपेत्य
जयति जरयति शिथिलं करोति, य ईं एतत्पदं
रथं न रथयोजितमश्वमिव सं समेत्य अस्य
भुरिजोबाह्वोर्दशस्वसारोऽङ्गुलयः अहेषत हेषणं
कृतवत्यः, यथाऽश्वोऽश्वमेत्य हेषते, एवं अस्यांऽ-
गुलयो लंकाधिष्ठात्रीं देवतामेत्याहेषंत उभयतश्च-
पेटिकाभ्यां तां ताडितवानिति भावः ॥ १० ॥

श्येनो न योनिं सदनं धिया कृतं
हिरण्ययमासदं देव एषति ॥ एरिणंति
बर्हिषि प्रियं गिराश्वो न देवा अप्येति
यज्ञियः ॥ ११ ॥

श्येनो नेति—यथा श्येनो योनिं कुलायं
गगनमार्गेण एषति गच्छति एवं देवो महारुद्रः

धिया कृतं ब्रह्म संकल्पनिर्मितं सदनं श्रीरामदारूपं गृहं एषति । कीदृशं गृहं हिरण्ययम् आसदं हिरण्यं याति प्राप्नोति श्रीरामभद्रदत्तमभिज्ञानांगुलीयकप्रापकं हनुमंतम् आभिमुख्येन प्रसीदत्युपविशतीत्यासदं यो यज्ञियोऽश्वो न अश्व इव देवान् प्रीणयन् अभ्येति, ईम् एनं प्रियं संदेवानां आसतमं बर्हिषि यज्ञे निमित्ते यज्ञादिवृषमार्गप्रवृत्त्यर्थं गिरा हेतुभूतया किंचिद्वक्तुमित्यर्थः। नएरिणंति अभिमुखं प्रेरयंति, अभिज्ञानप्रदानेन प्रविश्वस्तायां सीतायां हनुमान् वक्तुमारेभे इत्यर्थः ॥ ११ ॥

परा व्यक्तो अरुषो दिवः कविर्वृषा त्रिपृष्ठो अनविष्ट गा अभि ॥ सहस्रणीतिर्यतिः परायती रेभो न पूर्वीरुषसो विराजति ॥ १२ ॥

वचनमेवाह–परेति–दिवो द्युलोकात् परा दूरे व्यंक्तः अक्षयदत्तः–"परो दिवो ज्योतिर्दीप्यते" इति श्रुतेः । अरुषः शांतः शुद्धेन रूपेण कविः क्रांतदर्शी सर्वज्ञो मायाविरूपेण वृषा गृहस्थधर्मरूपः त्रिपृष्ठः त्रयो धर्मार्थकामाः यज्ञराज्यरतिरूपाः दारहरणात् पृष्ठे यस्य स त्रिपृष्ठः गाः अभि भूप्रदेशान् अभिव्याप्य अनविष्टशब्दमकरोत् त्वच्छोकेन सर्वा दिशः शून्याः पश्यन् हाहाशब्दं करोतीत्यर्थः ॥ एतेन मधुमान् द्रप्सः परिवारमर्षतीति सीतया पृष्टं यत् रामो मयि प्रीतिमानस्तीति तस्येदमुत्तरम् ॥ यत्पृष्टं रावणं सपरिवारं दग्धुमेष्यति तस्योत्तरमाह–सहस्रेति । स इदानीं यतिःत्वत्प्राप्त्यर्थं यतमानः सहस्राणीतिःसहस्राणि अनंतानि शूराणां नयतीति, तथा–परायतिः शत्रून् पराकर्त्तुं यतमानः रेभो न शब्दं कुर्वाणो महोक्ष इव पूर्वीरुषस आरभ्य अस्माकं त्वद्वियो-

गक्कालमारभ्य संप्रति विराजते दीप्यते वह्नीं सेनामादाय शत्रूनुन्मूलयितुं क्षमते इत्यर्थः १२॥

त्वेषं रूपं कृणुते वर्णो अस्य स यत्रा-
शयत्समिता सेधति स्रिधः ॥ अप्सा-
याति स्वधया दैव्यं जनं सं सुष्टुती
नसते सं गो अग्रया ॥ १३ ॥

त्वेषमिति—अस्य रामरूपस्य सोमस्य वर्णः क्षत्रियः तेन तत्स्वभावः 'शौर्यं तेजो धृतिर्दाक्ष्यं' इत्यादिः त्वेषं दीप्तं रूपमात्मनः कृणुते कुरुते, सः यत्र यस्यां समिता समितौ संग्रामे स्रिधः शोधकान् शत्रून् सेधति निषेधति, तत्र तान् अश-यत्शयनमकारयत् अस्मात् कश्चिदपि शत्रुर्जीवन्न मुच्यते इत्यर्थः। तेनाऽवश्यमसौ रावणं सपरि-वारं मारयिष्यत्येवेत्युक्तम्। स्वधया पितृकार्येण दैव्यं जनं देवताकार्यनिमित्तं च अप्साः

अपां सनिता विभाजकः सन् याति अनुसरति, सर्वं दैवपितृकार्यमद्भिरेव कुर्वन् स्वयमपि त्वच्छाभार्थमब्भक्षव्रतोऽस्तीत्यर्थः । तथा सुष्टुती शोभनया स्तुत्या संनसते देवैः पितृभिश्च सह संगतो भवति स्तुतिमात्रेण तेषामातिथ्यं करोतीत्यर्थः । कीदृश्या सुष्टुत्या संगो अग्रयेति--समीचीना गीर्वाणी सुरसंस्कारादिमती अग्रे पुरोवर्तिनी प्रधानभूता यस्यां सा तयेत्यर्थः ॥ सुरसशब्दगुंफितया स्तुत्येत्यर्थः ॥ ९३ ॥

उक्षेव यूथा परियन्नरावीदधि त्विषीरधित सूर्यस्य ॥ दिव्यः सुपर्णोवचक्षत क्ष्मां सोमः परि क्रतुना पश्यते जाः ॥ ९४ ॥

केन त्वं दक्षिणां दिशं प्रति गंतुं विसृष्ट इति प्रष्टुमिच्छंतीं सीताम् आलक्ष्य स्वयमेवाह--उक्षे-

वेति । यथा उक्षा रेतःसेचनकामः यूथा गोयूथानि परियन् परिक्रामन् एति, एवं दिव्यः सुपर्णः संपातिनामा पक्षी वानरयूथानि परिक्रामन् वचनामृतसेचनकामोऽरावीत्, इमं शब्दं कृतवान् । कोऽसौ यः सूर्यस्य त्विषीः दीप्तीः अधि अधिकम् अधित धृतवान्, संपातिजटायू पक्षिणौ अरुणपुत्रौ सूर्यं स्प्रष्टुं प्रस्थितौ, तयोः सूर्यदीप्त्या दह्यमानयोर्मध्ये संपातिः स्वपक्षाभ्यां जटायुमाच्छादयत् अधिको दग्धोऽभूदित्युपाख्याने । यः सुपर्णः क्ष्मां पृथ्वीं कृत्स्नाम् अवचक्षत उपरि भूत्वाऽधःपश्यति, स एव क्रतुना उपासनया सोमः सोमभावं गतः, स च तस्य जाः जायां सीतां परिपश्यते दिव्यदृष्ट्या त्वां दृष्ट्वाऽमुष्मिन् स्थले सीताऽस्तीत्यस्मान् प्रयुक्तवानित्यर्थः ।

न यदुक्तम् "नेंद्रादृते पवते धाम किंचन"

इति तस्याऽयमुपसंहारः । सोमः परिक्रतुना पश्यते जा इति ॥ १४ ॥

**अवीरामिव मामयं शरारुरभिमन्यते ॥ उताऽहमस्मि वीरिणींद्रपत्नी मरुत्सखा विश्वस्मादिंद्र उत्तरः ॥१५॥**

एवं रामानुग्रहमात्मनि श्रुत्वा सीता हनुमंतं स्वस्य दुःखमिष्टं च निवेदयति—अवीरामिवेति द्वाभ्याम् ॥ अयं शरारुर्मुमूर्षुः रावणः माम् अवीरामिव वीररहितामिव अभिमन्यते हिनस्ति राक्षसीद्वारा तर्जयति, उत परंतु अहं वीरिणी वीरवती अस्मि इंद्रपत्नी परमेश्वरस्य सहचारिणी मरुद्वायुस्तत्पुत्रःत्वं च सखा यस्याःसा मरुत्सखाऽस्मि विश्वस्मात् त्रैलोक्यादिंद्र उत्तरः उत्कृष्टतरः, अत एवं वीरवतीं मां घर्षयन् अयं मरिष्यत्येवेत्यर्थः ॥ १५ ॥

संहोत्रं स्म पुरा नारी समनं वावगच्छति ॥ वेधा ऋतस्य वीरिणींद्रपत्नी महीयते विश्वस्मादिंद्र उत्तरः ॥९६॥

संहोत्रमिति—होत्रम् अग्निहोत्रादिकं समनम् "यान्येव संग्रामनामानि तानि यज्ञनामानि" इत्युक्तेर्यज्ञं वा यां नारी पुरा अवगच्छति सा ऋतस्य कर्मणो यज्ञादेः वेधाः स्रष्टा वीरिणी वीरयुक्ता च भूत्वा इन्द्रपत्नी यथा, महीयते होत्रादिना तथा पुनरिंद्रः करोत्विति शेषः ॥ पक्षे यज्ञविवेकाभ्याम् अग्निजटायुभ्यां संरक्षितां श्रद्धां [illegible] राम एव नेतुं समर्थ इति भावः ॥ मरुत्प्राणः सूत्रात्मा ॥ ९६ ॥

इदं त एकं पर ऊं त एकं तृतीयेन ज्योतिषा संविशस्व ॥ संवेशने तन्व १ श्चारुरेधि प्रियो देवानां परमे जनित्रे ॥ ९७ ॥

एवं सीतयोक्तो हनूमान् सीतामाह—इदमिति भोः सीते त्वं द्विदलस्य दांपत्यस्य इदं त्वद्रूपमेकं दलम्,परञ्च तारकं पुरस्ताच्च समुद्रस्य पारेतवैकं दलं रामरूपमस्ति, अतस्तृतीयेन मया ज्योतिषा प्रभवता सहायेन संविशस्व मिथुनीभव अहं त्वां प्रापयिष्यामीत्यर्थः । संवेशने संयोगे तन्वः शरीरार्धस्य चारुः शोभनो देवानां प्रियो यज्ञार्हस्ते भर्ताऽस्ति, त्वं च जनित्रे प्रजोत्पत्त्यै स्वगृहे एधि स्थिरा भव ॥ पक्षे निष्कामभक्तिरेव श्रद्धां बोधोन्मुखीकर्तुमर्हति भावः १७॥

तनूष्टे वाजिन् तन्वं १ नयंती वाममस्मभ्यं धातुशर्म तुभ्यम् ॥ अहुतो महो धरुणाय देवान् दिवीवज्योतिः स्वमामिमीयाः ॥ १८ ॥

एवमुक्त्वा सीता हनुमंतमाह—तनूष्ट इति। हे वाजिन् वेगवन् वानर ते तव तनूः अंगानि प्रतितन्वं स्वशरीरं नयंती प्रापयंती चेत् स्याम्, तर्हि तुभ्यं धातुवच्छरीरेण स्वशरीरं संधानम् अस्मभ्यं शीघ्रं रामदर्शनकारित्वेन शर्मप्रदमपि दामं कुटिलं राजभार्यापि परपुरुषस्पर्शं प्राप्तवतीत्यकीर्तिकरमित्यर्थः। रावणस्पर्शस्त्वनिच्छंत्या जात इति न तत्र मम दोष इति भावः। अतोऽह्रुतः परैरनभिभूतः महो महान् रामः देवान् देवकार्यं कृत्वा मां परीत्य स्वीकरोत्वित्यर्थः। नियाः आमी इतिमध्यमो व्यत्ययेन वा॥ ९८॥

दूरे तन्नाम गुह्यं पराचैर्यत्त्वा भीते अह्वयेतां वयोधै॥ उदस्तभ्नाः पृथिवीं द्यामभीके भ्रातुः पुत्रान् मघवन् तित्विषाणः॥ ९९॥

एवंचेत्किंचिद्विश्वासकरमभिज्ञानं रामाय ब्रूहीत्युक्त्वा सीता हनूमंतमाह—दूरे तदिति । तद्बुद्धिस्थं गुह्यं दूरे बहुकालिकं पराचैर्दूरदेशीयैर्नाम निश्चितं बुद्ध्यस्वेति शेषः। यत् यन्निमित्तं भीते द्यावापृथिव्यौ त्वा त्वां वयोधै वयसो मम पीडाकरस्य पक्षिणो विग्रहस्तस्मै तदर्थं अह्वयेताम् एनां काकेभ्यस्त्राहीत्याहूतवत्यौ तदा पृथिवीं द्यां च उदस्तभ्नाः स्तब्धीकृतवानसि । अभिके कामुके पक्षिणि निमित्तभूते सति हेमघवन् लक्ष्मीपते भ्रातुः पुत्रान् विष्णोस्तव भ्राता इंद्रः तत्पुत्रान् काकरूपान् बहुत्वमार्षं तित्विषाणः इषीकया दीपयन् त्वदस्त्रदीपितं काकं कृत्स्ने द्यावापृथिव्यावपि त्रातुं न शक्ते अभूतामित्यर्थः । काकतुल्यं रावणं हत्वा मां नयेति भावः ॥ पक्षे कर्मैव श्रेयो न बोध इति विपर्ययो बोधभ्राता तज्जः संशयः काकः बोधप्रियां श्रद्धां कदर्थयन् बोधेन त्रैलो-

त्याद्दपनीत इति भावः ॥ मघवन् लक्ष्मीपते विद्यापते ॥ ९९ ॥

देवास आयन् परशूँरबिभ्रन्वाना वृश्चंतो अभि विड्भिरायन् ॥ निसुद्र्वं दधतो वक्षणासु यत्रा कृपीटमनु तद्दहंति ॥ १०० ॥

देवास आयन्निति—देवास आयन्नित्येकस्मिन् बहुवचनं बहुत्वभ्रमात्, देवाः आयन् आगताः पर एवं सीतासंदेशं प्राप्य प्रस्थातुं हनुमान् शत्रुसंपदं बबाधे तदावेदयंति राक्षसा रावणं प्रति । शून् अस्मदीयानेव अबिभ्रन् धृतवंतः विड्भिर्जनसंतानरूपाभिः प्रजाभिः सह वाना वनानि वृश्चन्तः छिंदंतः अभ्यायन् सुद्रु सुष्ठु द्रवतीति तं शीघ्रगम् अग्निं सेतुनिबद्धं तडागजलं वा वक्षणासु गृहैकदेशविशेषेषु सेतुभंगेन नदीषु वा निदधतः

संतः, यत्र कृपीटं वाप्यादौ जलमस्ति, तदपि अनुदहंति काष्ठादिकं दहंतस्तदूष्मणा वाप्यादीन्यपि शोषयंतीति भावः ॥ कृपीटमग्नियोनिः काष्ठादिकं वा कृपीटजत्वात् तदनु अन्यदपि वज्रपाषाणादिकं दहंतीत्यर्थः पक्षे कामस्य नगरं विषयाः, भोग आरामः, तज्जो हर्षः पुत्रः, ताम् विष्णुभक्तिं शमदमवैराग्यगर्भितत्त्वादनेकरूपाम् उच्छिनत्तीत्यर्थः ॥ १०० ॥

शशः क्षुरं प्रत्यंचं जगारादि्रं लोगेन व्यभेदमारात् ॥ बृहंतं चिद्दहते रधयानि वयद्वत्सो वृषभं शूशुवानः ॥ १०१ ॥

एवं श्रुत्वा रावणः शोचति—शशः क्षुरमिति । यथा शशः पशुः क्षुरं तीक्ष्णधारं लोहं प्रत्यंचं अभिमुखधारं जगार निगीर्णवान् अंतःकृतन्नेव प्रवि-

शति,एवं सीतां स्ववधार्थमानीतवानित्यर्थः।अद्रिं शैलं लोगेन लाति आदत्ते उद्गिरतीति लोगो लोष्टस्तेन आरात् दूरात् आगत्य व्यभेदं भेदितवान- स्मि बृहंतं महांतं आत्मानं चित् निश्चितं ऋहते क्षुद्राय सुखाय रंधयानि पीडयानि यथा वयत् गच्छन् वत्सः वृषभं महोक्षं शूशुवानः वर्धमानः आधिक्यं दर्शयन् ॥ १०१ ॥

सुपर्ण इत्था नखमासिषायाऽवरुद्धः परिपदं नसिंहः ॥ निरुद्धश्चिन्महिष- स्तर्ष्यावान् गोधा तस्मा अयथं कर्ष- देतत् ॥ १०२ ॥

एवंश्रुत्वा विचिंत्यापि रावणो हनूमंतं बबंधे- त्याह—सुपर्ण इति । सुपर्णः पक्षिवत्खेचरो राव- णः इत्था एवं व्यालग्राहिवत्, नखं न खिद्यते छेदनभेदनादिनेति नखं हनुमंतम् आसिषाय बद्ध-

पाशैराबबंध, स चावरुद्धो बद्धोपि परिपदं नासिंहः सिंह इव स्वतंत्रः परितोगच्छत्येव तथा तर्ष्या-वान् तृषाक्रांतो जलाशयाभिमुखो महिषो महा-नारण्यकः चित् इव निरुद्धोपि रोधकान् कर्षन् एवमेतत् तस्मै हनुमते अयथं असदृशं गोधा परिवेष्टनं पाशैर्बंधनं गुध परिवेष्टने पचाद्यचि टाप् दुर्बलैर्निरुद्धस्तानेव कर्षन् यथेष्टं संचर-तीति भावः ॥ १०२ ॥

अक्षानहो नह्यत नोत सोम्या इष्कृ-णुध्वं रशना ओत पिंशत ॥ अष्टाबं-धुरं वहताभितो रथं येन देवासो अन-यन्नभि सप्रियम् ॥ १०३ ॥

स एवं ब्रह्मपाशैर्बद्धोपि तान् यदा न गण-यति तदैनं देवाः प्रार्थयंते ब्रह्मपाशानामपमानो मा भूदित्येतदर्थम्—अक्षानह इति । भोः सौम्याः

विष्णुभक्ताः अक्षानहः अक्षं रावणपुत्रं मृत्युपाशैः बंध्नंतो यूयं नह्यत न आत्मानमपि बध्नीत, रशनाः ब्रह्मपाशान् इष्कृणुध्वं स्वीकुरुध्वम् आ उत पश्चात् पिंशत विभजत स्वीकृत्य खंडयत अष्टावंधुरं जानुद्वयकूर्परद्वयस्कंधद्वयजंघाद्वयेषु बंधनवंतं रथं देहम् अभितो नगरे वहत प्रापयत येन देवासो देवाः अभिप्रियं स्वेष्टम् अनयन् प्राप्नुवन् पुरे संचरता कृत्स्नेऽस्मिन् दग्धे देवाः सुखं प्राप्स्यंतीत्यर्थः ॥ पक्षे अक्षानहः इंद्रियजयिनः अभितः कर्मोपासनामार्गयोः विधिनिषेधपाशानंगीकृत्य विषयान् भोगांश्चोत्साद्य लब्धपरोक्षबोधाः अशनादीनि प्राणादिषु प्रक्षिप्य आत्मानमसंगं भावयतेत्यर्थः ॥ १०३॥

रक्षोहणं॑ वाजिनमाजिघर्मि मित्रं प्रथिष्ठमुपयामि शर्म ॥ शिशानो अग्निः

क्रतुभिः समिद्धः स नो दिवा सरिषः
पातु नक्तम् ॥ १०४ ॥

एवं बद्धस्य हनुमतः पुच्छे लापितमग्निं सीता प्रार्थयते—रक्षोहणमिति । रक्षोहणं रक्षसां अक्षादीनां हंतारं वाजिनं हरिं वानरं दृष्ट्वा आजिघर्मि क्षरामि शोकेनाऽश्रूणि निवर्त्तयामीत्यर्थः ॥ अतो मित्रं हनुमत्पितुर्वायोः सखायं प्रथिष्ठं प्रथमानम् अग्निं शर्म हनूमते कल्याणं उपयामि उपेत्य याचामि । तत्त्वायामीतिवत् वर्णलोपश्छांदसः । शिशानो दीप्यमानोऽग्निः क्रतुभिः यज्ञैः पूर्वम् अस्माभिः समिद्धः संदीपितः स इदानीं नोऽस्मत्संबंधिनं जनं दिवा नक्तं च सरिषः हिंसातः पातु ॥ पक्षेऽग्निर्विज्ञानम्, तद्युता भक्तिः कृत्स्नां कामसंपदं नाशितवतीत्यर्थः ॥ १०४ ॥

अयोदंष्ट्रो अर्चिषा यातुधानानुप-
स्पृश जातवेदः समिद्धः ॥ आजि-
ह्वया मूरदेवान् रभस्व क्रव्यादोवृ-
क्त्व्यपिधत्स्वासन् ॥ १०५ ॥

अयोदंष्ट्र इति–अयोदंष्ट्रः अर्चिषा ज्वालया
यातुधानान् राक्षसान् उपस्पृश, हे जातवेदः स-
मिद्धः सन् जिह्वया महाज्वालया मूरदेवान् मू-
लदेवान् पूर्वदेवान् असुरान् इति यावत् आरभस्व
स्पृश क्रव्यादो मांसादांश्च तान् वृक्त्वी एकी-
कृत्य च आसन् आस्येऽपिधत्स्व तिरोहितान्
कुरु ॥ पक्षे अयोदंष्ट्रोऽभेद्यार्थभेदनक्षमः अर्चिषा
सात्त्विकवृत्त्या यातुधानान् क्रोधादीन् निगृ-
ह्णीष्व, जातवेदः हे अग्ने अतीतानेकजन्मादि-
दुःखहृ शेषं स्पष्टम् ॥ १०५ ॥

यत्रेदानीं पश्यसि जातवेदस्तिष्ठंत-मग्न उत वा चरंतम् ॥ यद्वांतरिक्षे पथिभिः पतंतं तमस्ता विध्य शर्वा शिशानः ॥ १०६ ॥

यत्रेति—तं रावणं कामं वा विध्य भिंधि दूरीकुरु वा शर्वा सर्वाणि हिंस्राणि रक्षांसि शिशानः दीपयन् तयोरुभयोरपि अस्ता अस्तानि गृहाणि दृषत्काष्ठादिमयानि कामविषयभूतानि स्रगादीनि वा शेषं स्पष्टम् ॥ १०६ ॥

परि त्वाऽग्ने पुरं वयं विप्रं सहस्य धीमहि ॥ धृषद्वर्णं दिवेदिवे हंतारं भंगुरावताम् ॥ १०७ ॥

परीति—हे अग्ने त्वा त्वां विप्रं व्यापकम् हे सहस्य तेजस्विन् पुरं परि अग्निनगरस्य परितः धीम-

हि स्थापयामः कृत्स्नं नगरमावेष्टय यथा बहि-
र्निःसर्तुमन्यो न शक्नोति, तथा स्थिरो भवेत्यर्थः
धृषत् अन्यं धर्षयन् वर्णो यस्य तं त्वां धृषद्वर्णं
दिवेदिवे नित्यं भंगुरं विनाशिशीलं मायामयं
अहंकारादि तद्वत् तां भंगुरावतां हंतारं निधी-
महि ॥ पक्षे सर्वशरीरस्थं पाप्मानं भस्मी
कुरु, यथा बहिर्वासना: न निःसरेयुस्तथेति
भावः ॥ १०७ ॥

हरिं मृजंत्यरुषो न युज्यते सं
धेनुभिः कलशे सोमो अज्यते ॥
उद्वाचमीरयति हिन्वते मती पुरुष्टु-
तस्य कतिचित्परिप्रियः ॥१०८ ॥

एवं लंकां दग्ध्वा वानरैः सह हनुमान् रामं प्रत्या-
गत इत्याह-हरिं मृजन्तीति-हरिं वानरं हनुमंतं कृत-
कार्यं मृजंति प्रेम्णा हस्तेन परिमार्जयंति के अरुषः

रोषरहिताः शांताः श्रीरामभद्राः बहुत्वं पूजा-
याम् एतेनान्वेषणात्प्राकृतकोपाः स्थिता इति
गम्यते, नशब्द उपमार्थे उत्तरान्वयी यथा धेनु-
भिर्धेनुप्रभवैः पयोभिः कलशे द्रोणकलशे सोमः
समज्यते संगतो भवत्यतिशयाधानाय, एवं यो
हरिर्युज्यते अर्थात्स्वामिनेति लभ्यते । स च
हरिः वाचम् उदीरयति । हिन्वते वर्धयते च
स्वामिनं यतो मती मेधावी सुपः पूर्वसवर्णः
तामेव वर्धनरूपां वाचमाह—पुरुष्टुतस्य कतिचि-
त्परिप्रिय इति बहुभिः ब्रह्माद्यैः स्तुतस्य तव
मदीयाः परिप्रियः परितः प्रीणयंति ताः स्तुति-
वाचः कतिचित् कियत्यः यावती स्तुतिर्मया
कर्तव्या सा सर्वथाप्यत्यल्पैवेति भावः ॥ १०८ ॥

साकं वदंति बहवो मनीषिण इंद्रस्य
सोमं जठरे यदादुहुः ॥ यदीं मृजंति

सुगभस्तयो नरः सुनीळाभिर्दशभिः
काम्यं मधु ॥ १०९ ॥

साकमिति—अतः परं बहवो मनीषिणो धीमंतो वानराः साकं युगपत् श्रीरामभद्रं प्रवदंति, यत् यतः कारणात् ते सर्वे इंद्रस्य जठरे जठरतृप्त्यर्थं सोमं पयोभिर्मिश्रयितुम् आदुहुः दुग्धवत्या धेन्वाः कृतसोमयागात्तेषां रामपर्यंतं गतिरासीदित्यर्थः ॥ कुत एवं रामस्य दौर्लभ्यमत आह—यदिति। यत् यतः ईम् एनं रामं काम्यं कामनीयं मधु अमृतं नरो मनुष्याः सुगभस्तयः प्रज्ञानांशवो विशुद्धचेतस्त्वाद्येषां ते तथाभूताः दशभिः सुनीळाभिः समाननीडाभिः पंचभिः प्राणवृत्तिभिः पंचभिर्धीवृत्तिभिश्च सर्वैः कर्मभिः सर्वैर्ज्ञानैश्च मृजंति मृगयंति, तस्माद्रामेण सह संगमः महतः पुण्यस्य फलमिति ज्ञेयम् ॥ १०९ ॥

अरममाणोऽअत्येति गा अभि सूर्य-
स्य प्रियं दुहितुस्तिरो रवम् ॥ अन्व-
स्मै जोषमभरद्विनंगृसः सं द्वयीभिः
स्वसृभिः क्षेतिजामिभिः ॥ ११० ॥

संवादमेवाह तिसृभिः—अरममाण इति । इंद्र
ते ऋत्वियः सोम इति पदचतुष्टयमुत्तरमंत्रादप-
कृष्यते हे इंद्र श्रीराम ते तव सोमः सोमाभिषव-
निमित्तभूता ऋत्वियः ऋतौ ईयते गम्यत इति
ऋत्वियः ऋतुशब्दकादिणः । कः इयङ् ऋतु-
कालैकगम्या जायेत्यर्थः ॥ स सोमस्त्वद्वियोगा-
तुरः सूर्यस्य दुहितुः पतिव्रतात्वेनातिप्रसिद्धायाः
सावित्र्याः प्रियं रवं कीर्तिशब्दं तिरः तिरस्कृत्य
गाः भूप्रदेशान् अभितो व्याप्य अत्येति अति-
क्रम्य गच्छति लोकान्तराणीति शेषः ॥ एवं
स्याः पातिव्रत्यमुक्त्वा दुःखमाहुः—अन्विति ।

अस्मै एनम् उक्तविधं त्वदीयं सोमं प्राप्तुं विनं कमनीयं वस्तुजातं समर्पयितुं गृह्णातीति विनं-गृसो रावणः जोषं पर्याप्तं यथा स्यात्तथा अन्व-भरत् अनुहरति सर्वं कमनीयायै प्रयच्छति. अथापि सा संक्षेति अतिशयेन क्षीयत एव जा-मिभिः सहचरीभिः स्वसृभिः एकयोनिभिः द्वयी-भिरुभयीभिः चेतोवृत्तिभिः हेतुभूताभिः संक्षेति इष्टवियोगजैः शोकादिभिरनिष्टसंयोगजैर्भयादि-भिश्चातिक्षीणास्तीत्यर्थः ॥ ११० ॥

नृधूतो अद्रिषुतो बर्हिषि प्रियः पति-र्गवां प्रदिव इंदुर्ऋत्वियः ॥ पुरंधिवान् मनुषो यज्ञसाधनः शुचिर्धिया पवते सोम इंद्र ते ॥ १११ ॥

नृधूत इति–नृभिः राक्षसीभिर्धूतोऽवधूतः भीषितः अद्रिसुतः अद्रयः पाषाणाः सुता आ-

ज्ञप्ताः यस्मै पाषाणैरियं चूर्णीकर्तव्येति एवं भी-
षितोपि बर्हिषि तृणे निषण्णा इति शेषः ॥ प्रि-
यस्तव गवां पतिर्जितेंद्रियः प्रदिवः पुराणः इंदुः
ईश्वरः स्वसंरक्षणे प्रभुः ऋत्वियः व्याख्यातः पुरं-
धिंवान् बहुधीयुक्तः मनुषो मनुष्यरूपस्तव यज्ञ-
साधनः सहधर्मचारी धिया शुचिः पवते आ-
त्मानं पुनाति ॥ १११ ॥

नृबाहुभ्यां चोदितो धारया सुतोऽनु-
ष्वधं पवते सोम इंद्र ते ॥ आप्राः क्र-
तून् समजैरध्वरे मतीर्वेर्नद्रुषच्चम्वो ३
रांसदद्धारिः ॥ ११२ ॥

नृबाहुभ्यामिति—हे इंद्र ते तव सोमः सोम-
यागसाधनं सीताख्यः बाणरूपेण परीतः सन्
बाहुभ्यां नररूपस्य तव बाहुभ्यां भुजाभ्यां चो-
दितः प्रेरितःसन् अनुष्वधं स्वधा अन्नं तेन

तद्विकारो देह उच्यते प्रतिशरीरं पवते गच्छति शीघ्रमेवेत्यर्थः । वर्तमानसामीप्ये वर्तमानवन्निर्देशात् । कीदृशः धारया अविच्छिन्नप्रवाहेण सुतः निसृष्टः त्वं च क्रतून् संकल्पान् स्वस्य सीताया अस्मदीयांश्च आ अतिशयेन आप्राः पूरितवानसि, "कार्यसिद्धयवश्यंभावको भूतप्रयोगोऽगन्म सुवः सुवरगन्मेतिवत् तथा अध्वरे युद्धयज्ञे चम्वोः वानरराक्षससेनयोः मतीः बुद्धीः बुद्धिधर्मान् शौर्यादीन् समजैः सम्यक्जितवानसि ॥ अस्मिन्निरपेक्ष एव शत्रून नि॰ [illegible] समर्थोऽसीत्यर्थः यतस्त्वेति भावः ॥ कथं युष्माभिः सीता दृष्टेत्याशंकायां हनूमंतं निर्दिश्य वदंति वेनद्रुषत्पक्षीव वृक्षारूढो हरिर्हनुमान् आसदत् प्राप्तवान् त्वदीयं सोमसाधनमित्यनुषंगः समुद्रव्यवहिते पक्षिवरप्राप्ये देशे सीता हनुमता समुद्रं लंघयता दृष्टेत्यर्थः ॥ ११२ ॥

अंशुं दुहंति स्तनयंतमक्षितं कविं क-
वयोऽपसो मनीषिणः । समीं गावो
मतयो यंति संयत ऋतस्य योना
सदने पुनर्भुवः ॥ ११३ ॥

ततः किंवृत्तमत आह—अंशुं दुहंतीति—अंशुम्
अंशुमंतं सूर्यं वायुमग्निं वा त्रयः केशिन इति
"अग्निर्वायुः सूर्यश्च केशिनः" इति स्मृतेः तस्मात्
अपसः कर्माणि दुहंति, यथा गोः सारभूतं पयो
दुह्यते, एवं अग्नेः सारः परदाहकत्वम् सूर्यस्य
सर्वविषयप्रकाशकत्वम्, वायोः शीघ्रगामित्वं ब-
लवत्त्वं च मनीषिणो मनोनिग्रहसमर्थाः मतयो
मेधाविनः वानराः दुहंति आददत इत्यर्थः ।
कीदृशम् अंशुं स्तनयंतं गर्जंतं प्रख्यातमित्यर्थः
अक्षितमक्षीणं बलेन वेगेन चेत्यर्थः । कविं
क्रांतदर्शिनम् एतानि क्रमेणाग्निवायुसूर्याणां यो-

ग्यतया विशेषणानीति ज्ञेयम् । गर्जंतोऽक्षीणं-बलवेगाः गगनमार्गेण गच्छंतीत्यर्थः । गत्वा च किं कृतवंतस्तदाह—समिति । संयतः समेतीति संयत् संहतमचंचलं तस्य ऋतस्य सलिलस्य योना योनौ, सुपो डादेशः । आकरे समुद्रे, आधारे सदने, निषदने निमित्ते पुनर्भुवो गावः पूर्वं धातुः सकाशात् जाताः, पश्चाच्च-तुष्कोणत्वाद्याकरेण शिल्पिभ्यो नलादिभ्यो भूताः गावो भूमयः सुघटितशिलारूपाः इं लोकप्रसिद्धवत् संयंति एकीभावेन मिलंति । यथा—पट्टांगणेष्वविवृतसंधयः शिला निविशंते, एवं स्तब्धोदके सिंधावपीति तथांशुं दुहंतीति संबंधः ॥ ११२ ॥

नाभा पृथिव्या धरुणो महो दिवो३ ऽपामूर्मौ सिंधुष्वंतरुक्षितः ॥ इंद्रस्य

वज्रो वृषभो विभूवसुः सोमो हृदे पवते चारु मत्सरः ॥ ११४ ॥

नाभेति–दिवो द्युलोकादपि महः महति अपामूर्मौ सलिलानां संघे 'द्यौः समुद्रसमंतर' इति द्युसमुद्रयोः साम्यदर्शनात् तादृशे समुद्रे अन्तः मध्ये समुद्रस्य मध्ये इत्यर्थः ॥ पृथिव्याः नाभा । सुपो डादेशः । नाभिः नाभावुत्पन्नः पर्वत इति यावत् स धरुणो धारकोऽभूत् । समुद्रे नौकावत्पर्वतसमुदायोऽपि वानराणां धारणार्थं सेतुरूपेण स्थित इत्यर्थः ॥ कीदृशो नाभा सिंधुषु नदीषु निमित्तभूतासु उक्षितः सिक्तः शिरसि प्रवर्तमानाभिर्नदीभिः आर्द्रीकृतः अतिशयेन महानित्यर्थः ॥ एतेन "दशयोजनविस्तीर्णं शतयोजनमायते" । सेतौ तत्तत्पर्वतशिरोगता

नद्योपि बह्व्यः संतीत्युक्तम् । कथं सलि-
ले शिलानां तरणमतआह—इंद्रस्येति इंद्रस्य
परमेश्वरस्य रामस्य वज्रः वज्रवदप्रतिहतगतिः
वृषभो धर्मः विभूनि व्यापकानि वसूनि फलानि
यस्य स विभूवसुः । दैर्घ्यं सांहितिकम् । सोमः
सोमयागादिजन्मा ह्रदे जनानां हृदयशोधनाय
पवते गच्छति । कीदृशः सोमः मत्सरः देवानां
मदकरः हर्षद इतियावत् । यथाऽऽग्नेये दिव्ये धर्म-
बलादग्निः स्वीयं दाहकत्वं त्यक्त्वा शीतत्वं भज-
ति एवमिहापि रामधर्मबलाद्विशुद्धहृदयो महोद-
धिरपि स्वीयं मज्जकत्वं क्लेदकरत्वं च त्यक्त्वा
घनत्वं गतः तेन तत्र पाषाणास्तरंतीति
भावः ॥ ११४ ॥

जाया तप्यते कितवस्य हीना माता
पुत्रस्य चरतः क्वस्वित् ॥ ऋणावा

त्रिभ्यद्धनमिच्छमानोऽन्येषामस्तमुप-
नक्तमेति ॥ ११५ ॥

ततः परं द्वाभ्यां मन्त्राभ्यां सोममेव स्तुत्वाऽग्नि-मसुक्तस्य स्वक्षेद्रप्सस्येत्यादेराद्येन चतुर्ऋचेन पुनः सेतुबन्धनमेव स्तुतं तद्दृक्चतुष्टयमग्रे व्या-ख्यास्यते । ततः परमृक्पंचकं शेषभूतं तूपोद्घात एव व्याख्यातं; तदेवं सेतुबन्धांतां कथं समाप्य हनुमति समुद्रमुल्लंघ्याऽऽगते लंकायां किं वृत्त-मित्याशंकायां पुत्रवधनगरदाहादिना तत्रयोर्मं-दोदरीरावणयोः शोकमाह—जायेति कितवस्य धूर्तस्य कपटसंन्यासिनः सीताहर्तुः रावणस्य जाया मन्दोदरी तप्यते, यतः हीना पुत्रेणैव क्वस्विच्चरतः परलोकं कर्मानुरूपं गच्छतो माता हतपुत्रेत्यर्थः । कितवोऽपि ऋणावा ऋणशब्दो दुर्गभूमौ लंकाख्यदुर्गवान् समुद्रजलाश्रयवानपि

हनुमत्प्रतापं दृष्ट्वा बिभ्यत् भयं कुर्वन् रावणः अन्येषां राघवाणाम् । अस्तं गृहं सीतां धनं राज्यं च इच्छमानः इच्छन् उपनक्तं प्रदोषकाले एति सीतास्थानं रत्यर्थी सन् गच्छति ॥ पक्षे हर्षनाशेन सुखस्वादरूपायां मातर्युपतप्तायां कामरावणो मधुमत्याख्यां योगभूमिम् अयोगिभिर्दुर्गमां लंकारूपामाश्रितोऽपि भक्तेभ्यो बिभ्यत् रजोगुणस्योदयकाले पुनः श्रद्धां वशीकर्तुं कामयत इति भावः ॥ ११८ ॥

न मा मिनेथ न जिहीळ एषा शिवा सखिभ्य उत मह्यमासीत् ॥ अक्षस्याऽहमेकपरस्य हेतोरनुव्रतामप जायामरोधम् ॥ ११६ ॥

सः रावणः पुनः सीतया यो वः सेनानीरिति मत्याख्यातः उभयभ्रष्टः पुत्रं भार्यां चाऽनुशो–

चति-नमेति एषा भार्या मा मां न मिमेथ न हिंसितवती, न जिहीले न मम हेलनं कृतवती, तथा सखिभ्यो मत्प्रियेभ्य उत मह्यं च सर्वदा शिवा कल्याणरूपैवासीत् । ताम् । अनुव्रतां जायाम् अक्षस्य संबंधी यः एकश्चासौ परश्च एकपरस्तस्य हनुमतो हेतोः अपारोधम्. अक्षं निघ्नता हेतुभूतेन तेन अपरुद्धवानास्मि धिङ्मामित्यर्थः॥ पक्षे रतिं नाशयतः कामस्य वीर्यं बलं च धिग्धिगिति भावः ॥ ११६ ॥

द्वेष्टि श्वश्रूरप जाया रुणाद्धि न नाथितो विंदते मर्डितारम् ॥ अश्वस्येव जरतो वस्न्यस्य नाऽहं विंदामि कितवस्य भोगम् ॥ ११७ ॥

द्वेष्टीति--रावणबन्धोः कस्यचिदुक्तिः श्वश्रूर्दा स्पक्षीयान् स्त्रीगणान् हितोपदेशकर्तॄन् द्वेष्टि,

जाया अपरुणद्धि भोगादौ निरुंधे, नाथित उप-
तप्तः मर्डितारं सुखयितारं परदारसंगं न विंदते,
अतोऽस्य कितवस्य भोगं शरीरं न विंदामि न
पश्यामि, अयं कामवेदनया मरिष्यत्येवेत्यर्थः ॥
तत्र दृष्टांतः—जरतो जीर्यमाणस्याश्वस्य मृत्युना
केत्रा वा नीतस्य शरीरं न दृश्यत एवमस्यापी-
त्यर्थः ॥ पक्षे विष्णुभक्त्या उपतापितः कामो
भोगासक्तिं सुखास्वादलक्षणां रतिं च परिहरति
श्रद्धां च वशीकर्तुं न क्षमते, अतोऽस्य स्वरूपं
शीघ्रमेव नंक्ष्यतीति भावः ॥ ११७ ॥

सभामेति कितवः पृच्छमानो जेष्या-
मीति तन्वा ३ शूशुजानः ॥ अक्षासो
अस्य वितिरंति कामं प्रतिदीव्ने दधत
आकृतानि ॥ ११८ ॥

सभामेतीति—एवं हनुमता लंकादाहे कृते सति
धूर्तो रावणः पृच्छमानः प्रश्नार्थी सन्

समामेति जेष्यामीत्यहंकारेण तन्वा शरीरेण शूशुजानो वर्धमानः । वस्य जत्वं छांदसम् ॥ अक्षासः अक्षसदृशाः कनिष्ठभ्रातरो विभीषणादयः अस्य कामं मनोरथं वितिरंति विशेषेण तिरस्कुर्वंति । कीदृशाः प्रतिजिगीषवे रामाय कृतानि सीताख्यपणितद्रव्यलाभसूचकानि लक्षणानि आदधतः समर्थयंतः । पक्षे सभाशास्त्रम् । अक्षासः प्रमाणानि प्रतिदीव्ने बोधाय शेषं प्राग्वत् अत्र प्रास्य धारा इति मन्त्रः पठनीयः स च व्याख्यात उपोद्घात एव तत्र सख्युर्विष्णोर्जामिं जायां सीताख्यां क्रदन्तीमपि भगवान् न एति न प्राप्नोतीत्येव पदार्थः शेषं पूर्ववदेव ॥ ११८ ॥

उदीर्ष्वातः पतिवती ह्ये ३ षा विश्वावसुं नमसा गीर्भिरीळे ॥ अन्यामिच्छ पितृषदं व्यक्तां स ते भागो जनुषा तस्य विद्धि ॥ ११९ ॥

एवमुक्त्वापि सभ्या रावणं प्रार्थयंते–उदीर्ष्वेति। अतःसीताभिलाषनिर्बंधादुदीर्ष्व उद्गच्छ निवृत्तो भव, हि यतःएषा पतिव्रती परभार्या, विश्वावसुं रावणव्यामोहकारी गंधर्वः विश्वानि वसूनि यस्मिन् इति वा अवाप्तसकलकामं रावणं त्वां नमस्कारेण सह गीर्भिर्वाग्भिरीळे स्तौमि प्रार्थयामि। अन्यां पितृगृहस्थाम् अप्रत्तां कन्यामिच्छ, व्यक्तां विस्पष्टां जातस्त्रीलक्षणां सः सा स्त्री ते तव भागः जनुषा जन्मना तस्य तं विद्धि प्राप्नुहि ॥ ११९ ॥

उदीर्ष्वातो विश्वावसो नमसेळामहे त्वा ॥ अन्यामिच्छ प्रफर्व्यं १ सं जायां पत्या सृज ॥ १२० ॥

उदीर्ष्वेति–अत्र द्वितीयमंत्रे इच्छेत्यंतं प्राग्वत् प्रफर्व्यं प्रकर्षेण फलाभ्यां स्तनाभ्यां वेति रंहतीति

प्रफलवीः । लस्य रत्वम् अंतलोपश्च छांदसः । प्रफर्व्यं सुस्तनीमित्यर्थः । जायां सीतां पत्या रामेण संसृज साम कुर्वित्यर्थः ॥ पक्षे बोधप्रियां श्रद्धामपहाय विषयसुखदायिनींश्रद्धामाश्रयस्वेति भावः ॥ बोधेन सह कुर्वतस्तवाऽपि कल्याणं भवति—"बुद्धानां च तेषां सर्वेषु लोकेषु कामचारो भवति" इति सर्वकर्मफलभागित्वश्रवणात् ॥ १२० ॥

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ॥ उतो त्वस्मै तन्वं १ विसस्रे जायेव पत्य उशती सुवासाः ॥ १२१ ॥

एवं बोध्यमानेषु रावणादिषु किं वृत्तमत आह—उतत्व इति । उतत्वःअपि चैकःप्रहस्तादिः पश्यन् एकेन हनुमता कृतं कदनं पश्यन्नपि वाचं वचनस्यार्थं न ददर्श मदांधत्वात् उत त्वः

अप्येको रावणादिःशृण्वन्नपि शुकसारणादिमुखेन परबलमाकर्णयन्नपि न शृणोति तन्मनसि न करोति दुराग्रहग्रस्तत्वात्, उतो अपि त्वस्मै अन्यस्मै विभीषणाय तन्वं स्वरूपं वाक् स्वार्थं पकटीकरोति, यथा उशती कामयमाना जाया पत्ये सुवासाः ऋतुमती स्वं गुह्यं दर्शयति, तद्वत् अन्यैरदृष्टोऽपि भावी विभीषणादिभिर्दृष्ट इत्यर्थः ॥ १२१ ॥

**परा पूर्वेषां सख्या वृणक्ति वितर्तुराणो अपरेभिरेति ॥अनानुभूतीरवधून्वानः पूर्वीरिंद्रः शरदस्तर्तरीति ॥ १२२ ॥**

ततस्ते किं चक्रुरत आह–परा पूर्वेषामिति पूर्वेषां जन्मबंधूनां रावणादीनां सख्या सख्यानि स्नेहं परावृणक्ति दूरीकरोति विभीषणादिः,विशेषेण तर्तुराणः मरणं तर्तुकामः अपरैः कार्यबंधुभिः रामादिभिः सह सख्यानि एति अभिगच्छति,

अनानुभूतीःरावणादीनांभ्रांतिज्ञानानि अवश्यमेव शत्रून् जेष्याम इत्येवंरूपाणि अवधून्वानो दूरीकुर्वन् इंद्रः इदं भाविकदनं पश्यतीति इदंद्र इदंद्र एव इंद्रो विभीषणः पूर्वीः शरदः कालमृत्युं ततरीति अतिशयेन अमरत्वं प्राप्य तरति। इदमीदृशमिति-"तमिदंद्रं संतमिंद्र इत्याचक्षते" इति श्रुतिदृष्टमत्र इंद्रशब्दस्य निर्वचनं ज्ञेयम् ॥ पक्षे पूर्वेषां कामादीनाम् अपरेषां शमादीनां अनानुभूतीर्देहाद्यात्मभ्रांतीः ॥ १२२ ॥

अनृक्षरा ऋजवः संतु पंथा येभिः सखायो यंति नो वरेयम् ॥ समर्यमा संभगो नो निनीयात्सं जास्पत्य सुयममस्तु देवाः॥ १२३ ॥

एवं कुर्वतां विभीषणादीनां पुरोहिताः स्वस्त्ययनं कुर्वन्ति-अनृक्षरा इति। ऋग्भ्यो

वेदमार्गात् क्षरंति ते ऋक्षराः राक्षसादयः कंटकाः तद्रहिताः अनृक्षराः,अतएव ऋजवःपंथाः पंथानः संतु, येभिः यैः पथिभिः नोऽस्माकं सखायः वरेयं वरे श्रेष्ठे भूस्थानं याति संचरति तं सर्वोपरि वैकुंठे स्थितमपि भूस्थं रामं यंति गच्छंति; अर्यमा देवो नः अस्मदीयान् संनिनीयात् रामेण सह ऐक्यं गमयतात्,भगश्च संनिनीयात्, तथा जास्पत्यं सीतारामयोर्दांपत्यं धर्मः सुयमं सुसंयतम् अस्तु,भो देवाः ॥ १२३ ॥

प्र त्वा मुंचामि वरुणस्य पाशाद्येन त्वाबध्नात् सविता सुशेवः ॥ ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टां त्वा सह पत्या दधामि ॥ १२४ ॥

गच्छन् विभीषणः सीतामाश्वासयति-प्रत्वे-ति । त्वा त्वां वरुणस्य पाशात् प्राणिदुःखदात्

प्रमुंचामि, येन पाशेन त्वा त्वां सविता कर्माध्यक्षो देवः अबध्नात, सुशेवः सुसुखः ऋतस्य कर्मफलस्य योनौ भोगस्थाने सुकृतस्य पुण्यस्य लोके स्थाने अरिष्टां निर्दुःखां त्वां सह पत्या दधामि मा चिंतां कुर्वित्यर्थः ॥ वर्तमानसामीप्ये वर्तमानवन्निर्देशः ॥ १२४ ॥

आ सूर्यो अरुहच्छुक्रमर्णोऽयुक्त यद्धरितो वीतपृष्ठाः॥उद्गाननावमनयंत धीरा आशृण्वतीरापो अर्वागतिष्ठन्॥१२५॥

ततो विभीषणे दासतां गते रामः सेतुं कृत्वाऽतरदित्याह—आ सूर्य इति सूर्यः सूर्यवंशो रामः शुक्लं शुद्धम् अर्णः समुद्रजलम् अरुहत् केनोपायेनेत्यत आह—अयुक्तेति । यत् यतः हरितः पर्वततत्त्वसामान्यात् विराडंगुलिरूपान् पर्वतान् अयुक्त सेतुरूपेण योजितवान् । वीतपृष्ठाः अनु-

क्षाः सुसमा इत्यर्थः ॥ ताश्च धीराः हनुमदादयः उद्धाननावम् उदकदेशेन नावमिव अनयंत आनीतवंतः । अगाधे जले: कथमासां न मज्जनं जातम् अत आह—आशृण्वतीरिति । आशृण्वतीः-आज्ञाकारिण्यः आपः समुद्ररूपाः अर्वाक् अतिष्ठन् उपस्थानं दासवदकुर्वन् ॥ पक्षे सूर्य आत्मा शुक्रमर्णः ब्रह्म समुद्रम् हरितः इंद्रियनद्य आपो मनः ॥ १२५ ॥

अश्मन्वती रीयते संरभध्वमुत्तिष्ठत प्रतरतासखायः ॥ अत्रा जहाम ये असन्नशेवाः शिवान् वयमुत्तरेमाभि वाजान् ॥ १२६ ॥

अश्मन्वतीति—अश्मन्वती पाषाणवती तन्मयी सेतुरूपा नो रीयते आक्रम्यते । संरभध्वम् त्वरध्वम् उत्तिष्ठत प्रतरत समुद्रं भो सखाय इति

सेनापतिवाक्यम् । अत्र पुरःस्थायां लंकायां ये अशेवाः अस्माकमसुखाः क्रूरा असन् प्रदीप्यंत, तान् जहाम गच्छाम हंतुमिति शेषः। अभि अभि-मुखं वाजान् संग्रामान् शिवान् जयप्रदान् वयम् उत्तरेम कृतकृत्या भवेमेत्यर्थः ॥ पक्षे अश्म शरी-रम् अस्त्यस्यां साऽअश्मन्वती गलितदेहाभि-मानिनी ध्याननौरित्यर्थः । शेषं सुगमम्॥१२६॥

उरुं यज्ञाय चक्रथुरु लोकं जनयंता सूर्यमुषासमग्निम ॥ दासस्य चिद्वृष-शिप्रस्य माया जघ्नथुर्नरा पृतना-ज्येषु ॥ १२७॥

उरुमिति—समुद्रतरणानंतरं राक्षसैः सह युद्धे प्रवृत्ते भो नराः नररूपिणौ युवां यज्ञाय देवहि-ताय उरुं महांतं लोकं रक्षस्तमो नाशनेन प्रका-शांचक्रथुः, उ निश्चितं यतः सूर्यादीनां जनयि-

तारौ युवाम्; तथा दासस्य रावणस्य मायाः नागपाशबंधाद्याः जघ्नथुः नाशयामासथुः युवां वृषशिप्रस्य महोक्षसदृशशरीरस्य पृतनाज्येषु पक्षे यज्ञोपयोगाय माया लयविक्षेपरूपाः ॥ १२७ ॥

हरयो धूमकेतवो वातजूता उपद्यवि ॥
यतंते वृथगग्नयः ॥ १२८ ॥

हरय इति-हरयो वानराः, धूमवत् धूसराः केतुवदूर्ध्वीकृतानि पुच्छानि यैस्ते धूमकेतवः, वातो जूतो अतिवेगात् प्रवर्तिता यैस्ते वातजूताः उपद्यवि अंतरिक्षे यतंते अंतरिक्षचरान् राक्षसान् बाधितुं यत्नं कुर्वंति पृथक् पृथक् प्रत्येकमिति यावत्। अग्नयः अग्निवदितरनैरपेक्ष्येण सर्वं राक्षसकुलं दग्धुं क्षमा इत्यर्थः ॥ पक्षे हरय इंद्रियाणि हार्दाकाशे यतंते प्रवेष्टुमिति शेषः। अग्निवन्निर्दोषाः ॥ १२८ ॥

रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ॥ इंद्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश ॥ १२९ ॥

रूपमिति--रूपं रूपं प्रतिरूपो बभूव, यावंति राक्षसानां रूपाणि तावंति तत्प्रतिकूलानि रूपाणि दधारेत्यर्थः । तदस्य रामस्यानेकरूपत्वं प्रतिचक्षणाय विरोधिरूपांतरप्रत्याख्यानाय । न तु राम एव विश्वरूपोस्ति, अतस्तेषु रूपेषु स्वावयवेष्विव अन्योऽन्यं बाध्यबाधकभावो न युक्त इत्याशंक्याह—इंद्र इति । इन्द्रो रामः पाशान्यायेन बहुवचनमवयवाभिप्रायम् । तथा च सत्त्वप्राधान्येन देवरूपः, रजःप्राधान्येन असुररूपः, तमःप्राधान्येन राक्षसरूप इति पुरुरूपो बहुरूप ईयते गम्यते । यथा सर्वरसोपादानस्यापि

जलस्य स्वाभाविकं माधुर्यमिक्षुद्राक्षादिष्वतिशयेनाभिव्यजते । निंबुमरिचादिषु तदभिभूयोपाधिकमम्लत्वकटुत्वादिकं प्रथते तद्वदिदं द्रष्टव्यम् । अतस्तेषां बाध्यबाधकभावो युज्यत एव । हि यस्मात् अस्य इंद्रस्य दशशता सहस्रम् अनंता इत्यर्थः । हरयो वानरा राममनोनुवर्तिनः कायव्यूहे योगिशरीरांतरवद्युक्ताः सन्नद्धाः दृश्यंत इति शेषः । राम एव सर्ववानररूपोऽभवदित्यर्थः । तथा च श्रुतिः—"अयं वै हरयोऽयं वै दश च शतानि च सहस्राणि च बहूनि चाऽनंतानि च" इति । पक्षे देवासुराः शमकामादयः, इंद्र आत्मा हरय इंद्रियवृत्तयः शेषं समानम् ॥ १२९ ॥

यः सृबिंदमनर्शनिं पिप्रुं दासमहीशुवम् ॥ वधीदुग्रो रिणन्नपः ॥ १३० ॥

य इति—यो रामः सृबिंदं सरंति पतंति बिंदुवद्वर्तुलाः शिरोरूपा अवयवा यस्य स सृबिंदः

अर्दंतत्वम् आर्षम् । अत एवानर्शनिम् अगतिकम्। ऋष गतिस्तुत्योरित्यस्य सौत्रस्य धातोरिदं रूपम् । पिप्रुमिव पिप्रुं शरीरस्थचर्मकीलवज्जगत्यां मष्याकारचिह्नरूपं दासं रावणं सर्पवत् सविषोच्छ्वासं वधीत् अवधीत् । उग्रः यतः सामुद्रीरपि रिणन् सेतुकरणेन हिंसन्, तस्य कृतानि प्रवोचतेति पूर्वमंत्रगतेनान्वयः । सृबिंदादयः पंच राक्षसा इति भाष्यम् । पक्षे सृबिंदं निर्वीर्यम्, अनर्शनिं चित्तनिरोधादगतिकम्, पिप्रुं प्रसर्पणशीलं लोभकुंभकर्णम्, दासं दस्यत्युपक्षिणोतीति कामरावणम्, अहीशुवम् क्रोधेंद्रजितं च अपः देहं रिणन् प्रविलापयन् योऽवधीत्, तस्य योगिनः कृतानि ॥ १३० ॥

भद्रो भद्रया सचमान आगात् स्वसारं जारो अभ्येति पश्चात् ॥ सुप्रके-

तैर्द्युभिरग्निर्वितिष्ठन्नुशद्भिर्वर्णैरभि रामस्थात् ॥ १३१ ॥

भद्र इति—भद्रः रामभद्रः भद्रया सीतया सह सचमानः सज्जमानः आगात् दंडकारण्यमित्यर्थात्, स्वसारम् अंगुलयः स्वसारः तद्धृतं सीतायाः पाणिं ग्रहीतुं जारो रावणः पश्चात् रामात्परोक्षे अभ्येति आगत इति पूर्वोक्तानुवादः । ततो रावणे हते सति "जाया गार्हपत्य०" इति श्रुतेः जाया सहचरोऽग्निः, द्युभिः द्युलोकसाधनतया द्युशब्दवाच्यः, रामदारैः सह रामं रामस्याऽभिमुखम् अस्थात् स्थितवान्, सुप्रकेतैः शोभनचिह्नैरिति दारनिर्दोषत्वं सूचितम्,वितिष्ठन्नस्थादिति संबंधः तिष्ठन्नासीदित्यर्थः ॥ उशद्भिर्दीप्यमानैः वर्णैः लोहितादिवर्णज्वालाभिरुपलक्षितः, अयं चार्थः—पुनः पत्नीमग्निरदादिति मंत्रांतरेपि दृष्टः॥

पक्षे भद्रो बोधः, भद्रया श्रद्धया, जारः कामः, अग्निर्वाक् ॥ १३१ ॥

तेऽवदन्प्रथमा ब्रह्मकिल्बिषेऽकूपारः सलिलो मातरिश्वा ॥ वीळहुरास्तप उग्रो मयोभूरापो देवीः प्रथमजा ऋतेन ॥ १३२ ॥

तेऽवदन्निति—ते प्रसिद्धाः देवर्षयोऽग्निना आनीतायाः सीतायाः ब्रह्मकिल्बिषे ब्रह्मचर्यरक्षणाख्ये दोषे विषये ऋतेन सत्यशपथेन अवदन्, इयं निर्दोषेति शपथपूर्वकं राममवदन्नित्यर्थः ॥ ते के अकूपारः समुद्रः, सलिलो निर्मलः सलिलाधिपो वा, वीळहुराः कालचक्रचालकाः निमेषाद्यधिष्ठात्र्यो देवताः, तपो धर्मः, उग्रः, मयः सुखं भवत्यस्मादिति मयोभूर्वातः, आपः शरीरम् तच्चिह्नानि वेत्यर्थः ॥ १३२ ॥

सोमो राजा प्रथमो ब्रह्मजायां पुनः प्रायच्छदहृणीयमानः ॥ अन्वर्तिता वरुणो मित्र आसीदग्निर्होता हस्तगृह्यानिनाय ॥ १३२ ॥

ते किमवदन्नित्यत आह–सोम इति । प्रथमो राजा सोमः ब्रह्मजायां बृहस्पतिभार्यां पुनः हृत्वा तस्यां पुत्रमुत्पाद्य पश्चात्प्रायच्छत् दत्तवान्, अहृणीयमानः आनिंद्यमान इतरैः तारायां पातिव्रत्येन स्वकृतदोषाभावात् तस्याश्च अन्वर्तिता अनुगंता वरुणो मित्र आसीत्, अग्निर्होता एनां हस्तगृह्य हस्ते गृहीत्वा आनिनाय तस्मात्तारावदियं स्वयमदुष्टा त्वया स्वीकार्येति भावः ॥ १३२ ॥

हस्तेनैव ग्राह्य आधिरस्या ब्रह्मजायेयमिति चेदवोचन् ॥ न दूताय प्रह्ये-

तस्थ एषा तथा राष्ट्रं गुपितं क्षत्रि-
यस्य ॥ १३४ ॥

हस्तेनेति—अस्याः हस्तेनैव ग्राह्यः ग्रहणं तदेव आधिः दुःखं जातं न तारावत् संगेन यतः सर्वे देवाः ब्रह्मजाया ब्रह्मचर्यवती परभार्येयमिति चाऽवोचन् इत एव अनिच्छंतीमेनां धर्षयतस्तव नलकूबरशापनाशो भविष्यतीत्यवदन्नित्यर्थः ॥ अतो हेतोः दूताय पार्षदाय रावणाय प्रह्वे प्रकर्षेण जिहीत इति प्रहीस्तस्मै, वेगेन गच्छते एषा न तस्थे न तमनुसृतवती, तथा तेन प्रकारेणाऽनया क्षत्रियस्य रामस्य राष्ट्रोपलक्षितं कुलधर्मादिकं गुपितं रक्षितम् ॥ १३४ ॥

देवा एतस्यामवदंत पूर्वे सप्तऋषय-
स्तपसे ये निषेदुः ॥ भीमा जाया
ब्राह्मणस्योपनीता दुर्धां दधाति परमे
व्योमन् ॥ १३५ ॥

देवा इति–एतस्यां निमित्तभूतायां भीमा मृत्युप्रदा उपनीता बलाद्गृहीता ब्राह्मणस्य ब्रह्मविदः दुर्धां नरकयातनां दधाति परमे व्योमन् परलोके ॥ १३५ ॥

ब्रह्मचारी चरति वेविषद्विषः स देवानां भवत्येकमंगम् ॥ तेन जायामन्वविंदद् बृहस्पतिः सोमेन नीतां जुह्वं १ न देवाः ॥ १३६ ॥

ब्रह्मचारीति–ब्रह्मचारी प्राणः स्वाभाविकसंगृहीतः विषो व्याप्याः प्रजाः वेविषत् व्याप्नुवन् एकं मुख्यम् अंगं चक्षुः तेन प्रमाणभूतेन जुह्वं न जुह्वस्थहविवत् शुद्धाम ॥ १३६ ॥

पुनर्वै देवा अददुः पुनर्मनुष्या उत ॥ राजानः सत्यं कृण्वाना ब्रह्मजायां पुनर्ददुः ॥ १३७ ॥

पुनरिति—देवा अग्न्यादयः, मनुष्याः दशरथादयो राजानः इंद्रयमवरुणसोमाः सत्यं शपथं कृण्वानाः ददुः रामायेति शेषः ॥ १३७ ॥

पुनर्दाय ब्रह्मजायां कृत्वी देवैर्निकिल्बिषम् ॥ ऊर्जं पृथिव्या भक्तायोरुगायमुपासते ॥ १३८ ॥

पुनर्दायेति—विवाहापेक्षया इदानीं पुनर्दत्त्वा देवैर्निकिल्बिषं निर्दोषं यथा स्यात्तथा कृत्वी कृत्वा दत्त्वा च उरुगायं महाकीर्तिम् उपासते देवर्षयः। कथंभूतम् पृथिव्याः ऊर्जमन्नाद्यं भक्ताय विभज्य विभीषणसुग्रीवलक्ष्मणादिभ्यो राज्यानि विभज्य देवब्राह्मणयज्ञार्थं च विभज्य स्थितमिति शेषः ॥ १३८ ॥

सृजः सिंधूँरहिना जग्रसानाँ आदिदेताः प्रविविज्रे जवेन ॥ मुमुक्षमाणा

उत या मुमुक्षेऽथैता न रमंते नितिक्ताः ॥ १३९ ॥

तत्र प्रथमं प्रकृतैरेव कर्मभिरुपासकाः स्तुवंति—सृज इति । सिंधून् समुद्रान् सप्तचतुरो वा अहिना रावणस्य कालसर्पेण जग्रसानान् ग्रस्तान् सृज असृजः अभयदानेन पुनः सृष्टवानसि, तथा—आदित् अस्मादेव रावणात् एताः सिंधुभार्याः नद्यः प्रविविज्रे प्रकर्षेण भीताश्चलितवत्यः जवेन वेगेन, तथा-मुमुक्षमाणा रावणकारागारादात्मनो मोक्षमिच्छंतः मुमुक्रे मुक्ताः, अथ अन्यदा एता देवताः न रमंते इति एव यतः नितिक्ताः नितरां कटुकाः शोकोपहतरसाः इदानीं सम्यगवर्तंत इत्यर्थः ॥ पक्षे सिंधून् मैत्र्यादीन्, यमनियमप्राणायामप्रत्याहारसंयमतर्कान् वा पूर्वोक्तान्, एताः शमदमादयः, मुमुक्षमाणाः जीवा अहिना मोहेन ॥ १३९ ॥

सध्रीचीः सिन्धुमुशतीरिवायन्त्सनज्जार आरितः पूर्भिदासाम् ॥ अस्तमाने पार्थिवावसून्यस्मे जग्मुः सूनृता इन्द्र पूर्वीः ॥ १४० ॥

सीता रामं प्रत्युपगतेत्यन्यापदेशेनाहुः—सध्रीचीरिति । सध्रीचीः सहधर्मचारिण्यः । पूजार्थं बहुत्वम् । सिंधुं समुद्रवदपारं रामम् उशतीरिव कामयमाना नद्य इव आयन् आगताः, आसां जारो रावणः सनत् सर्वदा पूर्भित् शरीरशोषणो यः सः आरितो हिंसितः ॥ पक्षे समूले कामे हते श्रद्धादयो ब्रह्मात्रिसुखं प्रापुरित्यर्थः ॥ हे इंद्र हे राम ते तव अस्तं गृहम् अयोध्यां हार्दाकाशं वा पार्थिवानि वसूनि सर्वे कामा आजग्मुः अस्मे अस्मांश्च त्वद्दर्शिनः पूर्वीः सूनृताः वेदस्य वाचः "एष सर्वेश्वरः" इत्यादयः "अह

ब्रह्मास्मि" इत्यादयो वा आजग्मुः । ब्रह्मभावेन बहिर्भवंतं हार्दाकाशे चाऽऽत्मानं त्वां पश्याम इत्यर्थः ॥ १४० ॥

**सचंत यदुषसः सूर्येण चित्रामस्य केतवो रामविंदन् ॥ आयन्नक्षत्रं ददृशे दिवो न पुनर्यतो न किरद्धा नुवेद॥१४१॥**

ईदृशज्ञाने हेतुमुपासनामाह—सचंत इति । केतवो ज्ञानवंतोऽस्य रामस्य रासं पदम् ऋचः सामानि यजूंषि—"सा हि श्रीरमृता सताम्"इति श्रुतां त्रयीं तत्सारभूतप्रणवरूपां शब्दतोऽर्थतश्चाविंदन्, यस्त्वत्र शब्दमय्यां संपदि उकारो नास्तीति मन्यते, तं प्रत्येवं वदेत्, यत् यतः उषसः उषसम् उषोवदल्पप्रकाशं विराजम् अकाररूपं सूर्येण पूर्णप्रकाशेन हिरण्यगर्भेण उकाररूपेण सचंत ऐक्यमनयन्, कार्यत्वसामा-

न्यादकारमध्ये एव उकारस्यांऽतर्भावो बोध्यः ॥
एवमपि अमित्येवापेक्षितं न तु रामित्यत आह–
चित्रामिति । चित्रभानुत्वाच्चित्रो अग्निः रेफः सोऽ
स्यामस्तीति चित्रा सस्वरशब्दवती ततः सवर्ण-
दीर्घे रामित्यर्थः ॥ चित्रशब्दान्मत्वर्थीये अर्श-
आद्यचि टाप् । एवं च रेफार्थे नाग्निनाचिदाभा-
सेन सहितानि समष्टिस्थूलसूक्ष्मकारणानि
रामित्यनेन दर्शितानि, अर्द्धमात्रा तु प्रणववदत्रा-
प्यंतरस्ति, यां रां केतवोऽविंदन् सा पुनर्दृहशे
रामिति रेफाकारमकाराः पुनर्दृश्यंत इत्यर्थः
तत्र दृष्टांतो–दिवो नेति । नेत्युपमार्थः । दिवः
स्वप्नाः स्वल्पं प्राप्य यथा जाग्रद्दृष्टमेवार्थजातं
पुनस्तत्सदृशं दृश्यते, तद्वत्समष्टित्रयवाचकात्
रांपदात् क्रमेण सदृशान्यष्टिस्थूलसूक्ष्मकारण-
वाची रामिति पदं पुनःपठेदित्यर्थः ॥ अस्य
विशेषणम्-आयन्नक्षत्रमिति । आ इति स्वरूपं य

इवाचरतीति यत् आचारक्विबंतात् यत प्रातिप-
दिकात् कर्तरि क्विबिति तस्मिंस्तुक् । तेन य
इति स्वरूपं सिद्धम् इदं वर्णद्वयं द्वितीयेन
रामित्यनेन सह पठितं चेत् रामायेति चतुर्थ्यंतं
नाम भवति, नक्षत्रपदेन मुख्यत्वाच्चंद्रःतेनाऽस्य
कारणम्—"हृदयान्मनो मनसश्चंद्रमाः" इति
श्रुतिप्रसिद्धं हृदयं गृह्यते । यथा—"ता अन्नमसृ-
जंत इत्यन्नशब्देन पृथिवी तद्वत् तेनागमप्रसिद्धो
हृदयशब्दार्थो नमः शब्द उद्धृतो भवति । एषां
सर्वेषां वर्णानां संकलनेन रां रामाय नमःइति
उद्धृतो वेदितव्यः । एतत्फलमाह—यतो नकिर-
द्धानुवेदेति । यत इति तस्य यतमानस्य यतेः
नकिः न किरति इतस्ततो विक्षिप्यत इति नकिः
अविक्षिप्तं मनः अद्धा साक्षात् नु निश्चितं देवं
जानाति एवं मंत्रं जपन्नेतदर्थं मनसा साक्षात्
करोतीत्यर्थः ॥ "मनसैवेदमाप्तव्यम्" इति श्रुतेः

मंत्रार्थस्तु रां रां चासौ आश्चेति रां रामः तस्मै रामाय नमस्करोमि प्रह्वो भवाम्यहम्—"तत्राकारे वै सर्वा वाग्"इति श्रुतेः । अर्धमात्रागर्भितौ साभासौ व्यष्टिसमष्टित्रिकौ अकारार्थः ईप्सिततमत्वं चतुर्थ्यर्थः । तच्च तत्रान्वितमपि नांतः प्रज्ञमित्यादि—"स आत्मा स विज्ञेयः" इत्यंतश्रुत्या इतरेषां द्वादशानां निरस्तत्वेनार्धमात्रार्थे त्रयोदश एव पर्यवस्यति । तेन नम्यत्रयं नन्तृत्रयं नतिश्चैतेषां प्रकाशार्थं यदीप्सिततममर्धमात्राख्यं वस्त्वहमस्मीति तत्र—"नान्तःप्रज्ञाम्" इति सौत्रस्य चिदाभासस्य निरासः—"न बहिःप्रज्ञम्" इति वैराजस्य नोभयतः प्रज्ञमित्युपहितानुपहितोभयस्वरूपदर्शिन ऐश्वरस्य न प्रज्ञमिति तत्सदृशत्वेऽपि तदन्यस्य तैजसीयस्य—"न प्रज्ञानघनम्" इति विशेषविज्ञानहीनस्य प्राज्ञीयस्य, तथा—"अदृ-

ष्टम्"इति दृष्टसजातीयस्य सौत्रस्योपाधेः "अव्यवहार्यम्"इति व्यवहारार्हस्य वैजोपाधेः " अग्राह्यम् " इति योगिग्राह्यस्यैश्वरोपाधेः, "अलक्षणम्" इति विशेषलक्षणवतो वैश्वोपाधेः, "अचिंत्यम्" इति चिंतानिर्वर्त्यस्य तैजसोपाधेः, "अव्यपदेश्यम्" इति "न किंचिदवेदिषम्" इति व्यपदेशार्हस्य प्राज्ञोपाधेः, "एकात्यप्रत्ययसाह्राम्" इति षण्णामाभासानां प्रपंचोपशममिति षण्णामुपाधीनां अद्वैतमिति सर्वेषां निरासः । शिवमित्यर्थमात्रार्थानंदमात्रस्य परिशेष इति विभागो ज्ञेयः ॥ १४१ ॥

तव श्रिये मरुतो मर्जयंत रुद्र यत्तेजनिम चारु चित्रम् ॥ पदं यद्विष्णो रुपमं निधायि तेन पासि गुह्यं नाम गोनाम् ॥ १४२ ॥

एतस्य मुख्यमुपासकं रुद्रं स्तुवंति--तव श्रिय इति । हे रुद्र हे हनुमन् तव श्रिये त्वदधिगतसंपत्प्राप्त्यर्थं रामविद्यावाप्त्यर्थं मरुतो देवाः मर्जयंत शोधयंति, तपोध्यानादिनात्मानं यत् यतस्ते तव जनिम जन्म चारु रम्यं यतस्त्वया चित्रं पदं रेफाख्येणाग्निना युक्तं " चित्रामस्य केतवो रामविंदन्" इत्युदाहृतमंत्रे प्रसिद्धं रामित्येवंरूपं विष्णोरुपमं विष्णुवाचकस्य पदस्य समीपे दृश्यमानं यथा स्यात्तथा निधायि न्यधायि निहितम् अत्र "गं गणपतये नमः, दुं दुर्गायै नमः" इति मन्त्रशास्त्रमर्यादया रामित्यस्य समीपे सपूर्वकमेव विष्णुवाचिपदं निधेयम्--तच्च राघवादिपदेभ्यः शीघ्रतरं रामपदमेव वर्णसाम्याधिक्यादुपस्थितं भवति, तेन रामपदेन सह नाम नमंत्यनेनेति नाम नतिवाचिपदम् । उपासिनामविशि-

नहि गोनां गुह्यमिति । गोनामिंद्रियाणां गूहन-
स्थानं हृदयमित्यर्थः । तेन हृदयशब्दितं नमः
पदमुद्धृतं भवति, तद्योगाच्च रामपदादपि चतुर्थी
भवति, तेन "रां रामाय नमः" इति त्र्यक्षराण्यु-
द्धृतानि भवंति । यतस्त्वया चित्रं पदं विष्णो-
रुपमं निधायि, यतश्च तेन सह गोनां गुह्यनाम
पासि, अतस्ते जनिम चार्विंत्यन्वयः ॥ १४२ ॥

अहं मनुरभवं सूर्यश्चाहं कक्षीवां
ऋषिरस्मि विप्र ॥ अहं कुत्सामार्जु-
नेयं न्यृञ्जेहं कविरुशना पश्य-
तामा ॥ १४३ ॥

एवं राममुपासीनो रामतादात्म्याभिमानात्सा-
र्वात्म्यं प्राप्तो वामदेवापरनामा रुद्रो रामविशेष-
णैरेवात्मानं स्तौतीत्याह बृहदारण्यकश्रुतिः, तद्धै-
तत्पश्यन्नृषिर्वामदेवः प्रतिपेदे—अहं मनुरभवं सूर्य

श्चेतीति। यस्मिन्वंशेऽहमुत्पन्नस्तत्प्रवर्त्तकौ मनुसूर्यावहमेवाभवम्, यश्च मदवतारनिमित्तं दशरथेन तोषितः कक्षीवान् ऋषिर्विप्रो दीर्घदर्शी भाविकार्यज्ञः सोप्यहमेवास्मि, अहम् आर्जुनेयपुत्रं कुत्सं कुत्सनामानं पृञ्जे अर्जुन्याः पुत्रं पूर्वबालत्वादपक्वमेव मृतं संतं नितरां भंजितवानस्मि दीर्घायुष्प्रदानेन बहुतरतपनपरिस्यंदसंसर्गात्शिथिलतरत्वचं कृतवानस्मीत्यर्थः। तथा कवेः पिता भृगुः "अन्नं विराट्" इतिवत्कारणे कार्योपचारः, तव भार्याम् अन्यो हरिष्यतीति मह्यं शापं ददौ भृगुः सोप्यहमेवेत्यर्थः। तथा नु उशना कवेः पुत्रः शुक्रो मच्छत्रूणां तेजोवृद्धिकरः सोप्यहमेव। अतो मा मां सर्वात्मानं श्रीरामभद्रं पश्यत भोः साधका इति शेषः॥ १४२॥

दूरं किल प्रथमाजग्मुरासामिंद्रस्य याः प्रसवे सस्रुरापः॥ क स्वि-

दग्रं क बुध्न आसामापो मध्यं क वो नूनमंतः ॥ १४४ ॥

एवं जीवन्मुक्तस्य सार्वात्म्यमुक्त्वा विदेहमुक्तस्यं कैवल्यमाह—दूरं किलेति । प्रथमाः पूर्वे सनकाद्याः आसाम् आपो अद्भ्यः सकाशाद् दूरं जग्मुः, आप इंद्रस्यात्मनः प्रसवे सृष्टिकर्मणि प्रसस्रुः ब्रह्मांडरूपेण प्रसृताः, सकारणे पिंडब्रह्मांडे परित्यज्य शुद्धं ब्रह्म प्राप्ता इत्यर्थः । अन्ये तु आसामपाम् अग्रम् अवसानप्रत्यासन्नो भागः कस्वित् तथा बुध्नो मूलं क मध्यं च क भो आपः वः युष्माकम् अंतश्च नूनं निश्चितं क स्विदस्ति, तं जानीम इति भ्राम्यंतीत्यर्थः ॥ १४४ ॥

प्रवः पांतं रघुमन्यवोंधो यज्ञं रुद्राय मीळ्हुषे भरध्वम् ॥ दिवो अस्तो-

ष्यसुरस्य वीरैरिषुध्येव मरुतो रोदस्योः ॥ १४५ ॥

एवं सफलोपासनां समाप्य तत्प्राप्तिकामैस्त-त्संप्रदायप्रवर्त्तको रुद्रोप्याराधनीय इत्याह—प्रवः पांतमिति । हे रघुमन्यवः रामव्रतवो रामोपास्ति-कामा इति यावत्, मीढुषे विद्यामृतवर्षिणे रुद्राय यज्ञं भरध्वम् कीदृशं यज्ञं वः युष्माकम् अंधः अन्नं तद्विकारं देहं मनश्च पांतं रक्षंतम् "अन्नमयं हि सोम्य मनः" इति देहवन्मनसोप्यत्र विका-रत्वं श्रुतम् । कीदृशमंधः यत् दिवः स्वर्गापेक्षयापि अस्तौषि स्तुतं वेदे "ता अब्रुवन्सुकृतं बत" इति मानुषदेहस्य देवताभिरपि पुण्यत्वेन स्तुतत्वात् । असुरस्य सुरां विनाप्यमरस्य ब्रह्म-णो वीरैः पुत्रैः सनकादिभिरस्तौषीति संबंधः । मरुतां बाणवदाशुगाः प्राणाः रोदस्योर्भुवि दिवि

च वसतां पुंसां नृणां देवानां च इषुधौ निषंगे इव देहे अर्द्धनिष्क्रांताः संति, इषुध्येति–सुप आच् । चंचलत्वाज्जीवितस्य शीघ्रं तारकप्रातरुद्रं यजेतेति भावः ॥ १४५ ॥

हिरण्यकर्णम्मणिग्रीवमर्णस्ते नो विश्वे वरिवस्यन्तु देवाः ॥ अर्यो गिरः सद्य आजग्मुषीरुस्राश्च ।कन्नूभयेष्वस्मे ॥ १४६ ॥

अनिज्यमानोपि रुद्रो देशविशेषे कालविशेषे च कारुणिकत्वात्तारकं जनमात्रस्योपदिशतीति अत्र हि जन्तोः प्राणेषु प्रयाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवतीति अविमुक्तं प्रकृत्य जाबालाम्नातमर्थम् ऋषिराह–हिरण्यकर्णमिति । हरणात् हिरण्यं महावाक्यं कर्णे पतति, येन तत्र हिरण्य-

कर्णे मणिः आत्मतत्त्वं ग्रीवास्थेन उत्क्रममाण-प्राणेन लभ्यते, यत्र तत् मणिग्रीवम्, अर्णो जलं नोऽस्माकं विश्वे देवाः सर्वाणींद्रियाणि वरिव-स्यंतु सेवंताम् । अत्राहोरात्रपदयोः पूर्वापरवर्णलोपात् होरापदमिव हिरण्यकर्णमणिग्रीवपदयोरपि पूर्वापरावयवलोपेन मणिकर्णपदं निष्पन्नं स्त्रीत्वं लोकात्, तेन मणिकर्णिका रूपमर्णोत्र ग्राह्यम् । पदद्वयस्यैकस्वर्यपाठेनांगांगिभावावगमात् । त-त्त्वज्ञानस्य वाक्यकारणकत्वेन तदर्थयोरपि तथा-त्वावगमाच्च अतोऽत्रार्णः शब्देन- तदभिमानिनीं देवतामालक्ष्य तस्यां च विग्रहवत्त्वं प्रकल्प्य तत्रालंकारक्लृप्त्यर्थं पदद्वयमिति क्लिष्टकल्पना नोत्तिष्ठति, गौरवादैकस्वर्यपाठविरोधाच्च । अत्र हि वैदिकाः प्रथमं पदमाद्युदात्तं द्वितीयं सर्वानु-दात्तं च पठंतीति प्रसिद्धम्, न च तस्य सर्वानु-दात्तत्वे पूर्वावयवत्वमंतरेणान्यन्निमित्तमस्तीति

स्वरशास्त्रविद एव विदांकुर्वंतु । अर्णसः सेवायाः फलमाह—अयं इति। अयं ईश्वरो महारुद्रः उदाहृते सूक्ताद्यमंत्रे दृष्टः। गिरिधारकरूपाः उस्राः मन्त्र-सिद्धिरूपाः कामधेनवश्च सद्यः तपोजपादिकं विनैव अकस्मादाजग्मुषीः आगमनशीलाः सर्वे अस्मे अस्मान् चाकंतु तर्पयंतु, उभयेषु सवि-कल्पकनिर्विकल्पकभावेषु सिद्धिभिः स्वरूपा-नंदेन च प्रीणयंतु । अत्र समाधिव्युत्थानव्यक्त्य-पेक्षया बहुत्वम् । आ इत्यस्यावृत्त्या सद्य आज-ग्मुषीरित्यस्य पदद्वयस्याप्यावृत्तिः। अनाराधि-तोपि रुद्रो मणिकर्णिकायामंतकाले तारकब्रह्मो-पादिशति, किं पुनराराधित इति तदुभयं तार-कार्थिना न मोक्तव्यमित्यर्थः । यत्तु "वर्णोऽरणी यमपत्यम्" इति व्याख्यातं तदर्णः शब्दस्य उदकनामसु पाठादपत्यनामस्वपाठाच्च श्रुतहा-न्यश्रुतकल्पनाप्रसंगादुपेक्ष्यम् ॥ १४६ ॥

न स स्वो दक्षो वरुण ध्रुतिः सा सुरामन्युर्विभीदको अचित्तिः ॥ अस्ति ज्यायान्कनीयस उ पारे स्वप्नश्च नेदनृतस्य प्रयोता ॥ १४७ ॥

अतः परं विग्रहधर्मैरेव स्तुवंति न सस्व इति। हे वरुण हे वरणीयसः दक्षः तत्सामर्थ्यं समुद्रोल्लंघनादि हनुमदादीनां स्वः स्वकीयं न भवति, किं तु तवैव सा धृतिः अधिष्ठातृत्वम्। यतो ज्यायान् भवान ईश्वरः कनीयसोऽस्मदादेर्जीवस्य उ पारे समीपेस्ति अतस्त्वदीयेनैव सामर्थ्येन समुद्रतरणादिकमेते कारिताः। अन्यसामर्थ्येनान्यः करोतीत्यत्र दृष्टांतः—सुरेति । सुरा मद्यम्,मन्युः क्रोधः,विभीदकः विभीतकः, तत्स्थकलिः अचित्तिः, भूतपित्ताद्यावेशजन्य उन्मादः एतैराविष्टः पुरुषोऽशक्तोपि शक्तसाध्यं कर्म करोति

तद्वदयमपीत्यर्थः ॥ जायां संविविशिनष्टि स्वप्नश्च नेति । स्वप्न इव इत् अनृतस्येव भयसुखादेस्त-द्धेतोश्च प्रयोता संयोजयिता वियोजयिता च । 'युमिश्रणामिश्रणयोः, इत्यस्य रूपम् । यः स्वप्न-वत्कृत्स्नं प्रपंचं सृजति संहरति च तस्य अस्मदु-पबृंहणं कियदिति भावः ॥ १४७ ॥

त्वं ह त्यदिंद्र कुत्समावः शुश्रूषमाण-स्तन्वा समर्ये ॥ दासं यच्छूद्रं कुयवं न्यस्मा अरंधय आर्जुनेयाय शिक्ष-न् ॥ १४८ ॥

लोकस्थोप्यलौकिकं कर्म करोषीत्याह—त्वं हेति । हे इन्द्र त्वं ह प्रसिद्धं त्यत् इतरेषां परोक्षं कुत्सम् ऋषिम् आवः रक्षितवानसि कदा समर्ये कालेन सह स्पर्द्धायां सत्याम् । तन्वा मृतस्य शरीरेण सहागतस्य पितुर्वाक्यं शुश्रूष-

माणः मनसि कुर्वन् मृतं पुत्रमानीय द्वारि शोचतो विप्रस्य वाक्यं श्रुत्वा यममपि जित्वा तत्पुत्रमानीतवानसीत्यर्थः । कथं मृतमपि रक्षितवानित्यत आह–दासमिति । दासं शूद्रं शूद्रस्यायोग्येन तपसा शुष्यंतं कुयवं कुत्सितेन स्वस्य दोषहेतुना मुनिधर्मेण युज्यते स्वधर्मेण च सेवया वियुज्यत इति कुयवम्, अस्मै आर्जुनेयाय अर्जुन्याः पुत्राय कुत्साय तज्जीवनार्थं न्यरंधयः नितरां हिंसितवानसि । शिक्षन् शिक्षयन् धर्ममर्यादाम् ॥ १४८ ॥

यत्रौषधीः समग्मत राजानः सामिताविव ॥ विप्रः स उच्यते भिषग्रक्षोहाऽमीवचातनः ॥ १४९ ॥

एवं रामभद्रं स्तुत्वा हनुमता सह जांबवंतं स्तुवंति–यत्रौषधीरिति । यत्र हनुमति

जांबवति वा द्रोणाचलस्यानेतरि सर्वौषधीस्व-रूपगुणाभिज्ञे वा निमित्तभूते सति ओषधीः सर्वाः ओषधयः सशल्ययो राघवयोर्विशल्यक-रणार्थाः समग्मत संगताः । तत्र दृष्टांतः—यथा राजानः समितौ सभायां संगच्छंते, तद्वत् समिताविव स विप्रो व्यापकः सर्वौषधीनामानेता प्रयोक्ता वा भिषक् रोगक्षयकृदित्युच्यते, स एव रक्षोहा रक्षोहंतॄणां रामादीनां जीवनप्रदानात् अमीवचातनः अमीवान् दुष्टान् हंतुं चातयते प्रार्थयते स तथा दुष्टवधकाम इत्यर्थः ॥ १४९ ॥

स्रक्के द्रप्सस्य धमतः समस्वरन्नृतस्य योना समरंत नाभयः ॥ त्रीन्स मूर्ध्नो असुरश्चक्र आरभे सत्यस्य नावः सुकृतमपीपरन् ॥ १५० ॥

अथ सीतादीन्स्तुवंति—स्रक्वे इत्यादिना नवर्चेन सूक्तेन । आंगिरसः पवित्र ऋषिः पवमानसोमोदेवता सोम इति विष्णोरेव नाम—"हविरातिथ्यं निरुप्यते सोमे राजन्यागते" इत्युपक्रम्य "वैष्णवो भवति विष्णुर्वै यज्ञस्तस्मा एतद्धविरातिथ्यं निरुप्यते" इत्युपसंहरन् यथा दध्यादेर्द्रप्सः अत्यम्लतया बुद्बुदाकारेण उपर्यागतो भागः तद्वदुद्गीतस्य द्रप्सस्य रावणाधमतो लोकान् तापयतः कर्मणि षष्ठी । तं प्रति स्रक्वः सरणम् अभिसारः तस्मिन्कर्त्तव्ये सति समस्वरन् सम्यग्जयशब्दमकुर्वन् योद्धारः । ततश्च ऋतस्य योना योनौ ऋतस्य योनिरिति पदं जलनामसु प्रविष्टम् भाष्ये तु यज्ञस्योत्पत्तिस्थाने इति व्याख्यातम् । नाभयः जलस्य गर्भे गताः "अद्भ्यः पृथिवी"इति श्रुतेर्जलादुत्पन्ना वा भूमयः कविना दृष्टरूपाः समरंत सम्यग् मज्जनं

विना अगच्छंत । यस्य सक्तं नाभयः जलेऽत-
रंत, सः असुरो रावणाख्यः त्रीन् "कपिंजला-
नालभेत" इतिवत् बहुत्वम् । प्रातिपदिकार्थस्य
त्रित्वस्य त्रित्वे पर्यवस्यति, तेन नव संख्यान्
मूर्ध्नो मस्तकान चक्रे छिन्नवान्, कदा आरभे
आरभ्यत इत्यारभो यज्ञस्तस्मिन्। रावणेन हि
नव शिरांसि वह्नौ हुतानीत्युपाख्यायते अतस्त-
स्य वधार्थं महानेव यत्न आस्थेय इत्यर्थः । जले
ह्यषत्संगस्य किं फलमत आह–सत्यस्येति।
सत्यस्य धर्मस्य संबंधिन्यो नाव इव नावः तार-
काः शिलाः सुकृतं शोभनकर्माणं रामं ससहा-
यम् अपीपरन् अपारयन् समुद्रस्य पारं प्रापित-
वत्य इत्यर्थः । यथा–सत्यस्य बलेनाग्नेये दिव्ये
तत्परशुग्रहणादौ वह्निः शीततां याति, एवं
सीतायाः पातिव्रत्यधर्ममाहात्म्यात् तद्बंधच्छे-

दार्थं शिला अपि समुद्रे तीर्णा इत्यर्थः । "धर्मनावः शिला" इति ब्रह्मवैवर्ते सप्तमाध्याये तृतीयांशे दृष्टम्—"इत्युक्त्वा सा शिला विप्रैः पातिता तज्जले शुभे । चक्रुः शिवकथां पुण्यां काशिवासिजनैर्वृताः ॥ क्षणांतरे गौस्तृषिता सवत्सा समुपागमत् ॥ तयापीतं जलं तृप्ता साभवच्छृणु पार्वति ॥ सा शिला मुनिमुख्यानां प्रभावाज्जलमध्यतः ॥ जलोपर्यभवच्छीघ्रं पश्यतां सर्वदेहिनाम् ॥ यथा तुंबीफलं शुष्कं गच्छतीतस्ततो जले ॥ तथा लघुतरा जाता तस्या धर्मस्य गौरवम्" ॥ इति ॥ १५० ॥

सम्यक्स्रवंति सरितो न धेना अंतर्हृदा मनसा पूयमानाः । एते अर्षंत्यूर्मयो घृतस्य मृगा इव क्षिपणोरीषमाणाः ॥ १५१ ॥

वस्वादिरूपेण सर्वान्वानरान्स्तुवंति–सम्यगिति सम्यंचः सुगतयः सम्यक् चारु अह्रेषत अवद्धंत, महिषा महांतो वानराः त एव सिंधोः समुद्रस्य ऊर्मौ एकदेशे शतयोजनविस्तीर्णे वेनाः शोभमानाः अधि उपरि अवीवियन् क्षिप्तवंतः, सत्यस्य नावः शिलारूपा इत्यनुकृष्यते, मधोः आदित्यस्य–"असौ वा आदित्योयदेतन्मधु" इतिच्छांदोग्यश्रुतेः। धाराभिः रोहिताद्यमृतपंचकधाराभिः वसवो रुद्रा आदित्या विश्वे देवा मरुत इति पंच गणाः अर्कम् अर्कतुल्यमात्मानमेव जनयंतः उपासनाबलेनाविष्कुर्वंतः, इत एव इंद्रस्य रामस्य प्रियां तन्वं तनुं सीताम् अवीवृधन् वार्द्धितवंतः, रावणागारे निरुद्धां सीतां जयशब्दैराह्लादयन्नित्यर्थः ॥ १८१ ॥

पवित्रवंतः परिवाचमासते पितैषां प्रत्नो अभिरक्षति व्रतम् ॥ महः समुद्रं वरुणस्तिरोदधे धीरा इच्छेकुर्धरुणेष्वारभम् ॥ १५२ ॥

अत्रावीवियन्नित्येतद्विवृणोति—पवित्रवंत इति। यथा पवित्रवंतः अध्वर्यवः वाचं पर्यासते विध्यर्थं कृष्णमनुतिष्ठति, एषां पिता भृतिदानेन पालयिता यजमानः व्रतं यज्ञं फलम् अभिरक्षति सर्वस्वीकृत्यास्ते, एवं यत्प्रयुक्ता वानराः सेतुं चक्रुः। स महो महान् वरुणो वरणीयः रामः समुद्रं तिरोदधे शिलाभिराच्छादितवान्। धीराश्च वानराः धरुणेषु भूमिधरणसमर्थेषु धरणेषु पर्वतेषु आरभितुं स्पर्शमेव शेकुः कर्तुमिति शेषः।

न तु तान्वोढुं सलिले वा तारयितुं शेकुरिति भावः । यथोक्तमभियुक्तैः "ये मज्जंति निमज्जयंति च परांस्ते प्रस्तरा दुस्तरे वार्द्धौ वीर तरंति वानरभटान्संतारयंते च वै ॥ नैते ग्रावगुणा न वारिधिगुणा नो वानराणां गुणाः । श्रीमद्दाशरथेः प्रतापमहिमारम्भः समुज्जृंभते " ॥ १९२ ॥

सहस्रधारे यत्ते समस्वरान्दिवो नाके मधुजिह्वा असश्चतः ॥ अस्य स्पशा न निमिषंति भूर्णयः पदे पदे पाशिनः संति सेतवः ॥ १९३ ॥

अथ प्रतिष्ठास्तवः सर्वत्र निग्रहानुग्रहकर्त्ता त्वमेवासि अतः स्वस्थानस्थाने वास्मान्पाहीत्याहुः—सहस्रधारे इति । सहस्रधारे सोमे

अभिषवणीये निमित्ते ते प्रसिद्धाः देवर्षयः समस्त्ररन् अवश्यं सोमः सोतव्य इति शब्दमकुर्वन् कुत्र दिवो नाके स्वर्गे कर्मभूमौ मधुजिह्वाः मधुरभाषिणो हितैषिण इति यावत् असश्चतः सोमाभिषवणं विना गतिहीनान् त्रैवर्णिकान् प्रति समस्वरन्निति योजना । फलितमाह—अस्येति अस्य सोमाभिमानिनो विष्णोः समुद्रतीरे धातुः रामस्य स्पशाश्चाराः पदेपदे संति न च ते निमिषंति अत्यंतावहिताः संतीत्यर्थः । अनिमेषणोपलक्षिता देवा एवास्य चारास्ते च भूर्णयः बहुप्रदाः पाशिनः पाशवंतश्च सेतवो बंधनकर्तारश्च त्वमंतर्यामी त्वत्प्रेरिताश्च देवाः सर्वत्रास्मान्पांत्वित्यर्थः । इतः परं सूक्तशेषः प्रागेवोपोद्घाते व्याख्यातः ॥ १९३ ॥

अष्टौ पुत्रासो अदितेर्ये जातास्तन्व१स्परि ॥ देवां उपप्रैत्सप्तभिः परामार्त्ताण्डमास्यत् ॥ १५४ ॥

एवं स्तुत्वा गतेषु मुनिषु शेषमवतारकृत्यं "व-म्रस्य मन्ये मिथुनाविवव्री, अन्नमभीत्यारोदय-न्मुषायन्" इति उपोद्घाते एव किंचिद्व्याख्यातं ततोप्यवशिष्टमृषिराह—अष्टाविति । यथा लक्ष्म-णादयो रामादनन्याः एवं तद्भार्या अपि सीतातो-ऽनन्याः, अतस्तासां पुत्राः अदितिशब्दितायाः सीताया एव पुत्राः, ते चाष्टौ कुशलवादयः, ते चा-दितेः पृथिव्यास्तन्वः शरीरस्य परि उपरि जाताः राजान इतिशेषः । रामादीनां चतुर्णामष्टौ पुत्रा अष्टसु स्थानेषु राजानो जाता इति रामायणादौ स्पष्टम् । सा च जगन्माता देवान्द्युलोकं सप्तभिः

पुत्रैः सह उपप्रैत् उपगता, ते च गार्हस्थ्यवंतश्च-त्वारो वर्णास्त्रय आश्रमाश्च तांश्च परा मार्त्तांडं सूर्यमण्डलात्परस्तात् ब्रह्मलोके आस्यत् क्षिप्तवती ॥ १५४ ॥

सप्तभिः पत्रैरदितिरुपप्रैत्पूर्व्वं युगं प्रजायै मृत्यवे त्वत्पुनर्मार्त्तांडमाभरत् ॥ १५५ ॥

पूर्व्वं युगं ब्रह्मलोकं मृत्यवे मृत्युसंबंधिन्यै प्रजायै मर्त्यान्स्रष्टुं त्वत् एकं स्वांशमादाय पुनर्मार्त्तांडम् आभरत्त् आप्यायितवती, ततो वृष्टिद्वारा पुनर्भूमौ प्रजावृद्धिं कृतवतीत्यर्थः ॥१५५॥

भूमिर्भूमिमगान्माता मातरमप्यगात्॥ भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम् ॥ १५६ ॥

इतः प्रागेव सीतालक्ष्मणौ स्वं विग्रहमुपसंजह्रुरित्याह–भूमिरिति । भूमिः सीता भूमिम् अगात् प्रविवेश, माता भूमेस्तोलयिता शिरसा धर्त्ता शेषरूपी लक्ष्मणः मातरं स्वप्रकृतिमनंतम् अप्यगात् अपि गतः, वयं च पुत्रैः पशुभिश्च सङ्गता भूयास्म, यो नो द्वेष्टि रजकादिर्निन्दको वा मृत्युर्वा स भिद्यतां नश्यतु ॥ १५६ ॥

नावान क्षोदः प्रदिशः पृथिव्याः स्वस्तिभिरति दुर्गाणि विश्वा ॥ स्वां प्रजां बृहदुक्थो महित्वावरेऽदधादा परेषु ॥ १५७ ॥

उपाधिपक्षपाती मायावी मायाकृतं सर्वमनु चकारेत्याह–नावानेति । नावान नौकया यथा क्षोदो महारुद्र आक्रम्यते, एवं स्वस्तिभिः

कल्याणैः पुष्पकादिभिः पृथिव्याः प्रदिशः प्रदेशान् आक्रम्य स्वां प्रजां विश्वा सर्वाणि दुर्गाणि संकटानि अतिपारयित्वा बृहदुक्थो महाकर्मा रामः महित्वा स्वमाहात्म्येन संततिरूपां प्रजाम् अवरेषु भूलोकेषु जनरूपां प्रजां परेषु ब्रह्मलोकेषु य अदधात् । एतेन पौरजनपदानात्मलोकं प्रापयन् महाकारुणिको रामभद्र एव शरणी करणीय इति दर्शितम् ॥ १८७ ॥

लक्ष्मणार्यपरतां गिरामिमां लक्ष्मणार्यपुरुषेण दर्शिताम् ॥ सांगवेदपदवाक्यमानविस्कोपि वीक्ष्य सुमतिः प्रमोदताम् ॥ १ ॥ श्रीरामरक्षाव्याख्यानं मन्त्ररामायणाभिधम् ॥ व्याख्यातं राघवस्तेन प्रीयतां करुणानिधिः ॥ २ ॥ दर्शितः सीतयाद्धायं वेदारण्ये निरध्वनि ॥ संतो विपुलयंत्वेनं यास्कभाष्यानुयायिनः ॥ ३ ॥

इति श्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवं-
शावतंसगोविंदसूरिसूनोः श्रीनीलकण्ठस्य
कृतिः स्वोद्धृतमन्त्ररामायणव्याख्या
मन्त्ररहस्यप्रकाशिकाख्या
समाप्तिमगमत् ॥



पुस्तक मिलनेका पता–

**खेमराज श्रीकृष्णदास,**

"श्रीवेङ्कटेश्वर" स्टीम् प्रेस– बम्बई.

# भारतादि इतिहासकथाग्रंथाः।



| नाम. | की.रु.आ. |
|---|---|
| श्रीमहाभारत–सटीक छोटे हरफका... | २५–० |
| हरिवंश–सटीक माहात्म्य और संतान-गोपाल यन्त्रानुष्ठान सहित इसके श्रवणादिसे वन्ध्यत्व अष्टदोष निवारणहोके सुसंतति वंश प्राप्त होता है ... ... ... | ६–० |
| हरिवंश–पं० ज्वालाप्रसादमिश्रकृत-भाषाटीका समेत ग्लेज ... | ९–० |
| वाल्मीकिरामायण–संस्कृतमूल और पंडित ज्वालाप्रसादजीमिश्रकृत अत्युत्तम पीयूषधारा भाषाटीका | |

| नाम. | की. रु. आ. |
|---|---|
| समेत सातोंकांड श्रीरामचन्द्रजीकी अपूर्व कथा है भक्तजनोंको अवश्य पढ़ना चाहिये ... ... | १८–० |
| वाल्मीकीयरामायण–तन्निश्लोकी रामानुजी भूषण संस्कृत टीकासहित | २०–० |
| वाल्मीकीयरामायण–रामाभिरामीटीका चिकना कागज ... ... | ९–० |
| " तथा देशीकागज ... ... | ८–० |
| वाल्मीकीयरामायण–सुन्दरकांड मूल बडे अक्षरका ... ... | २–० |
| तथा छोटागुटका ... ... | ०–१० |
| वाल्मीकीयरामायण–सुन्दरकाण्ड भूषणादि टीकात्रयसमेत ... ... | ३–० |
| वाल्मीकीयरामायण–सुन्दरकांड भाषाटीका सहित ... ... | २–८ |

| नाम. | की. रु. आ. |
|---|---|
| वाल्मीकीयरामायण—मूल खुलापत्रा बडा अक्षर पाठकरने योग्य ... | ८—० |
| तथा रेशमी जिल्द बडा अक्षर ... | ६—० |
| [illegible]मायण—पं० बलदेवप्रसाद-मिश्रकृत भाषाटीकासमेत जिसमें रामचन्द्रजीका सम्पूर्ण चरित वर्णनहै यह गुप्तरामायण शिवजीने पार्वती-को और यही ज्ञानामृत ब्रह्माजीसे नारदजीने उपदेश लिया और नारदजीसे वाल्मीकि व्यासने प्राप्त-कर नैमिषारण्यमें शौनकादिसे कहा ... ... ... | ४—० |
| अध्यात्मरामायण—संस्कृत टीका चिकना कागज ... ... ... | ३—० |
| " तथा रफ कागज... ... | २—८ |

नाम. कीं. रु. आ.

| नाम. | की. रु. आ. |
|---|---|
| अध्यात्मरामायण–मूल ( गुटका रेशमी ) पाठकरनेयोग्य ... | ०–१ |
| भारतसार "संस्कृत" ( महाभारतकी संक्षेपमें कथा ) ... ... | [illegible] |
| रामाश्वमेध–( श्रीरामचन्द्रजीके अश्वमेधकी संपूर्ण कथा )मूल बडे अक्षरोंमें ... ... ... | २–० |
| " तथा भाषाटीका सहित ... | ४–० |
| जैमिनीयाश्वमेध–मूल मोटाअक्षर पांडवोंके अश्वमेधकी संपूर्ण कथा ... | २–० |
| " तथा भाषाटीका सहित ... | ४–० |
| वेंकटेश इतिहासमाला–मूल ( इसमें शेषाचल वेंकटेशमाहात्म्य है ) .. | १–८ |
| सत्योपाख्यानरामायण–परमोत्तम (श्रीरामचन्द्रजीका बालचरित्र वर्णनहै) | १–४ |

| नाम. | की. रु. आ. |
|---|---|
| वेङ्कटेशमाहात्म्य–बडा द्वादशपुराण संगृहीत ... ... ... | ४–० |
| रामचरित्र–( पद्मपुराणान्तर्गत ) ... | ०–३ |
| रामचरित्र–( नृसिंहपुराणस्थ ) ... | ०–६ |
| नासिकेतोपाख्यान–मूल यथायोग्य कर्मानुसार स्वर्ग नरकका सुख दुःख प्राप्ति वर्णन ... | ०–५ |
| नासिकेतोपाख्यान–भाषाटीका समेत | ०–८ |
| मूलरामायण–मूल ... ... | ०–१॥ |
| " तथा भाषाटीका ... ... | ०–१॥ |
| अद्भुतरामायण–मूल ... ... | ०–१२ |
| अद्भुतरामायण–भाषाटीका सहित पं० ज्वालाप्रसादमिश्रकृत ... ... | १–० |

# भाषा इतिहासग्रंथाः ।



| नाम. | की. रु. आ. |
|---|---|
| श्रीमद्वाल्मीकिरामायण—केवल भाषा दो जिल्दोंमें इसकी भाषा मूल पुस्तकके प्रत्येक श्लोकसे मिलाकर बनाई गई है और श्लोकार्थ जाननेके लिये प्रत्येक सर्गके श्लोकांकभी डाले गये हैं पुस्तक बड़ी होनेके कारण दो जिल्दोंमें बांधी गई है तथा दोनोंमें सुन्दर विलायती कागज और विलायती कपडा और सोनेके अक्षर लगे हुए हैं ... | १०—० |
| तथा रफ कागज ... ... | ९—० |
| अध्यात्मरामायण—केवल भाषामात्र सुन्दर जिल्द बंधी हुई इसके अभ्या | |

| नाम. | की. रु. आ. |
|---|---|
| सके भलीप्रकार अध्यात्म और भक्ति प्राप्त होती है ग्लेज | २-५ |
| " तथा रफ ... ... | १-१४ |
| रामाश्वमेध-केवल भाषा वार्तिकमें जिल्दबँधी ... ... | २-० |
| रामाश्वमेध-भाषा पद्यमें रेवारामजी कृत इसमें दोहा, चौपाई और छन्द रामायणके अनुसार वर्णित हैं सब लोगोंके पढने योग्य है ... | २-० |
| रामाश्वमेध-भाषापद्यमें छोटा ... | ०-१२ |
| जैमिनीयअश्वमेध भाषा-परम मनोहर दोहा, चौपाई, छन्दबद्ध ग्लेज | २-० |
| " तथा रफ कागज ... | १-१२ |
| हरिवंश-भाषावार्तिक ग्लेज ... | ६-० |
| " रफ ... ... | ४-८ |

नाम. की. रु. आ

लका इतिहास—भाषामें ( पं० बलदेवप्रसाद मिश्र रचित ) नेपालदेशके आदिका सांगोपांग वर्णन इत्यादि ... ... ०—८

राजस्थान इतिहास—प्र०और द्वि०भाग अर्थात् कर्नलजेम्स टाडप्रणीत-अंगरेजीसे भाषानुवाद पं. बलदेवप्रसादमिश्रकृत सुन्दर कागज और विलायती कपड़ेकी जिल्द जिसमें सोनेके अक्षर लगे हैं प्र० भा० १०—०

" द्वितीय भाग ... १०—०

---

पुस्तक मिलनेका ठिकाना—

**खेमराज श्रीकृष्णदास,**

श्रीवेङ्कटेश्वर " स्टीम् प्रेस—बंबई